# अभिनिष्क्रमणं

## महाकाव्यम्

रचयिता

श्री चन्दन मुनि

★

प्राक्कथन :

युगप्रधान आचार्य श्री तुलसी

★

भूमिका .

डा० लूडो रोचर
पैनसिलवानिया यूनिवर्सिटी
( अमेरिका )

★

हिन्दी अनुवाद .

मुनिश्री मोहनलाल 'शार्दूल'

तेरापंथ द्विशताब्दी समारोह की स्मृति में

प्रकाशक .

जवरीमल डालमचन्द

१०३, प्रिन्सेस स्ट्रीट बम्बई-२

★

जवरीमल डालमचन्द

३, पोर्चुगीज चर्चस्ट्रीट

कलकत्ता–१

★

सोहनलाल मोहनलाल बैंगानी

बीदासर (चुरु-राजस्थान)

★

प्रथम प्रवेश .

जून १९७१

★

मुद्रक

रामनारायण मेडतवाल,

श्री विष्णु प्रिंटिंग प्रेस

आगरा–२

मूल्य . आठ रुपए

# ABHINISHKRAMNAM

## MAHAKAVYAM

*Author*

**Shri Chandan Muni**



*Foreword* :

**Yugpradhan Acharya Shri Tulsi**



*Preface* :

**Dr. Ludo Rocher**

Professor. Pennsylvania University

( U. S. A. )



*Hindi Translator* :

**Muni Shri Mohanlal 'Shardul'**

IN THE MEMORY OF TERAPANTA DWISHATABDI CELEBRATION

*Publishers*
Jawarimal Dalamchand,
103, Princece Street, Bombay-2



Jawarimal Dalamchand
3, Portuguese church Street
Calcutta-1



Sohanlal Mohanlal Bengani,
Bidasar (Churu-Rajasthan)



*First Edition*
June 1971



*Printers* .
Ramnarayan Maratwal
Shri Vishnu Printing Press,
Agra-2

*Price* : Rs. *8.00*

# प्राक्कथनम्

साहित्य-सरिता सतत प्रवहमाना विलसति। तस्या उद्गमोऽस्ति गभीरा हृदयानुभूतिः। यदा श्रद्धा स्फूर्तिमाप्नोति, भावना भवति तरङ्गिता, अनुभूतिरुन्निनीषा नयति, तदा काव्यधारा प्रस्फोटमाव्रजति।

'अभिनिष्क्रमण' सञ्ज्ञकं काव्यमपि श्रद्धाप्रेरितमस्ति। यद्यपि श्रद्धाया उत्कर्षोऽस्मिन् सभ्राजते तथापि शब्द-विन्यास-सौष्ठव, वाक्यलालित्य, प्रयोग-नैपुण्य च काव्यात्मानं पूर्णरूपेण सुरक्षयन्ति सन्ति।

अधुनातने काले सस्कृतभाषाया काव्यलेखन प्रायः कल्पनालोक-विहरणमिवाभाति। सस्कृत मृतभाषेति गीयते साम्प्रतिकैर्विज्ञैः।

चन्दनमुनिना संस्कृत-भाषायामनेकान् ग्रन्थान् विरचय्य न केवल तेरापथ-धर्मसघस्य गौरववृद्धिः कृता, अपितु अस्या जीवितत्वमपि प्रसाधितम्। एतन्नूनमेव प्रमोदास्पद सस्कृतानुरागिणाम्।

प्रस्तुत-काव्ये भिक्षुस्वामिनोऽभिनिष्क्रमण वर्णित-मस्ति। यस्मिन् युगे एतत् सर्व घटितम्, तदासीत् सम्प्रदायकोलाहलाकुलम्। इदानी धर्मसमन्वयस्य, साम्प्र-दायिकसद्भावनायाश्च गौरव वृद्धिगतमस्ति। यद्यपि प्राचीनघटनाया वर्णने कतिचित् प्रसगाः किञ्चिदप्रिया अपि भवन्ति, तथापि तै सद्भावेन भवन्ति सोढव्या। लेखकस्य एतत् महत्त्वपूर्ण उत्तरदायित्वमस्ति यत् स प्राचीनघटनाप्राप्त गरलमपि समन्वयसुधास्नात प्रस्तुवीत। यत त्रुटितमपि पारस्परिक प्रेम पुन सघटना सस्पृशेत्। शब्दात्मन सौन्दर्यमिव अर्थात्मनोऽपि तदपेक्षितमस्ति। कविना अस्मिन् विषये जागरूकता प्रदर्शिता।

आशासेऽह अन्येऽपि काव्यग्रन्थास्तद्लेखनी-प्रसूता भविष्यन्ति जनाना पुरत प्रस्तुता।

वि० स० २०२७ चैत्रकृष्णा षष्ठी
लाडनूं

—आचार्य तुलसी

# अपनी ओर से

तेरापथ के आद्यप्रवर्तक प्रात स्मरणीय स्वनामधन्य श्रीमद् भिक्षुस्वामी के द्विशताब्दी महोत्सव (केलवा एव राजनगर) के अवसर पर स्वामीजी के विषय मे, मैं कुछ सस्कृत मे लिखूँ, ऐसी प्रेरणा मुझे आचार्य श्री तुलसी द्वारा मिली। अपने आराध्य के प्रति मेरे हृदय मे अटूट श्रद्धा रही है। मै स्वामीजी की अनेक अन्यान्य विशेषताओ मे दो के प्रति सर्वाधिक आकृष्ट हूँ—उनकी सत्य-निष्ठा एव निर्भीकता के प्रति। मैं उन्हे साकार सत्य रूप मे देखता हूँ। जो उन्हे सत्य प्रतिभासित हुआ, उसे उन्होने नि सकोच प्ररूपित किया, समझाया और अपनाया। उनके वज्रसार हृदय ने कभी यह भीतिकम्पन महसूस नही किया कि जनता मुझे क्या कहेगी ? मेरे साथ कैसा व्यवहार करेगी ? मुझे किस दृष्टि से देखेगी ? सत्य का ही अपर रूप अभय है, भयाक्रात कभी सत्यनिष्ठ नही हो सकता। **'माया भयम्'** यह उक्ति यथार्थ है—छल, प्रपच माया ही भय है, सत्य हमेशा अभय ही है। मेरे कहने का यह अभिप्राय नही है कि स्वामीजी ने जो कुछ निरूपित किया उसके आगे पीछे चिंतन का अवकाश ही नही है, क्योंकि कोई कितना ही मेधावी क्यो न हो, फिर भी वह सत्याश को ही अनावृत कर सकता है। पूर्ण सत्य शब्दो के परिवेश मे आ ही नही सकता, यह निश्चित तत्व है। हाँ, उन्हे जो प्रतीत हुआ उसे अपनाते हुए वे जी-जान से अपने गम्य पथ पर चरण बढाते चले। इसी भावना को लेकर 'अभिनिष्क्रमण' काव्य-प्रबन्ध की रचना हुई। एक प्रतिष्ठापित सम्प्रदाय से पृथक् होकर अनेक असुविधाओ और बाधाओ को चीरते हुए उन्होने महान् अभिनिष्क्रमण किया। उसके प्रेरणा-बीज किस तरह पनपे, इस प्रश्न के सदर्भ मे यह काव्य गुरु-शिष्य के सौहार्दपूर्ण वार्तालाप से प्रारम्भ होता है।

## मेरे लिए कठिनाई

मेरे लिए बडी कठिनाई यह थी कि इस ऐतिहासिक चरित्र को किस प्रकार प्रस्तुत किया जाय, जबकि आज हम उन्ही अन्यान्य जैन सम्प्रदायो के

साथ समन्वय की दिशा मे अग्रसर हो रहे है, विना किसी घृणा। पर नवीन के परस्पर सौहार्द से मिलते जुलते है। फिर यह ऐतिहासिक वृत्त और सम्बद्ध वर्णन क्या उनके हृदय को कुछ अप्रिय नही लगेगा ? क्या वे मेरे इस कार्य को ऐकातिक श्रद्धा से प्रेरित तथा साम्प्रदायिकता से अनुप्राणित नही मानेगे ? किंतु मेरी अंतरात्मा की यह आवाज है, कि यदि लेखक का हृदय वास्तव मे साम्प्रदायिक विग्रह से विपायत नही है तो यथार्थ निरूपण करती हुई उसकी लेखनी की नोक किसी भी विज्ञ चिंतक-हृदय मे चुभन पैदा नही करेगी, क्योकि यह एक ऐतिहासिक घटना है। आज के सम्बन्ध से उसे नही जोड़ना चाहिए। फिर लेखक सत्य का आराधक है, उसे अपनी रचना के परिणामो की अपेक्षा मूल प्रेरणाओ को ही विवेकपूर्वक दृष्टिगत रखना चाहिए।

## सत्य से समझौता

मेरी स्वय की भी यही मान्यता है कि सत्य सत्य ही है। उससे कभी समझौता नही हो सकता। यूनान की एक कहावत है—'प्लेटो मुझे प्रिय है, सुकरात मुझे प्रिय है, किन्तु सत्य मुझे सर्वाधिक प्रिय है।" जैन-परम्परा सत्य को भगवान मानती है। यही गांधीजी मानते थे। समझौता तो "कुछ बाण झुके कुछ कमान झुके" की कहावत को चरितार्थ करते हुए होता है। इसीलिए तो नग्न सत्य प्राय कटु ही प्रतीत होता है—कहा भी है—"हितं मनोहारि सुदुर्लभ वच"। पर किया क्या जाए ? इसका कोई दूसरा मार्ग भी नही है। समालोचको से मेरा नम्र निवेदन है कि इतिवृत्तो मे एकरूपता न होने के कारण और श्रद्धा के केन्द्रो की विभिन्नता होने के कारण ही मेरा ऐतिहासिक वर्णन उन्हे अतिरजित एव केवल श्रद्धा-प्रेरित ही लगे। लेकिन स्वय उन्होने भिक्षु स्वामी को किस रूप में चित्रित किया है इस ओर भी दृक्पात करले तो स्वत मेरी वर्णन-शैली कुछ कोमल-सी ही प्रतीत होगी। अस्तु; मेरे साक्षात्द्रष्टा न होने के कारण जयाचार्य-रचित 'भिक्षु जस रसायन' और मुनि हेमराज जी एव मुनि वेणीरामजी द्वारा रचित स्वामीजी के चरित्र ही इस रचना की आधारशिला है। काव्य-शैली मेरी है, पर मूल तथ्य तो प्रागुनिरूपित ही है, अत "अह निर्दोषोऽस्मि" कहने का मुझे हक है।

## काव्य की दिशाएँ

इस काव्य मे प्रमुखतया मेवाड एव मारवाड के प्राकृतिक स्थलो का, तत्सामयिक स्थितियो का, लोगो के रहन-सहन का और यथासमय परिवर्तित होती हुई ऋतुओ का सजीव चित्रण किया गया है। काव्यकर्त्ता स्वय इस

प्रदेश का परिव्राजक होने के कारण इस काव्य मे उसके द्वारा अनुभूत तथ्यो का यथार्थदर्शन होना असम्भावित नही है। यथासम्भव काव्य के एकाकी कल्पना-लोक मे विहरण न करते हुए जीवन-चर्या मे घटनेवाले दैनदिन व्यवहारो का विशद विवेचन करने की ही मैंने सदैव चेष्टा की है।

## जिनका मै आभारी हूं

सर्वप्रथम मैं अणुव्रतअनुशास्ता श्री आचार्य-चरण का आभारी हूँ, जिन्होने इस काव्य का प्राक्कथन लिखना सहर्ष स्वीकार किया। रायपुर के दुर्घट वाता वरण ने इस कार्य को सम्पन्न नही होने दिया। वाद मे प्रलम्ब विहार करते हुए बीदासर पहुँचते ही माघ-महोत्सव के अवसर पर आप विशेषत अस्वस्थ हो गए। अनेक भारी सघीय कार्यो के होते हुए भी आपने किंचित् स्वास्थ्य लाभ करते ही अपने वचन का निर्वाह किया। आचार्यप्रवर ने सक्षिप्त किन्तु शिक्षाप्रद एव मार्मिक प्राक्कथन लिखकर इस काव्य को गौरव प्रदान किया। मुनि श्री मोहनलाल जी 'शार्दूल' ने, "इस काव्य का अनुवाद तुम्हे ही करना है", इस मेरे कथन को सविनय स्वीकारते हुए शीघ्रातिशीघ्र अनुवाद जैसे श्रम-साध्य कार्य को सुन्दर रूप मे सम्पन्न किया। अन्यथा यह काव्य इस रूप मे जनता के सामने नही आ पाता। उनके प्रति मैं किन शब्दो मे कृतज्ञता ज्ञापित करू ? श्री सुन्दरलाल भाई जवेरी ने पैनसिलवानिया यूनिवर्सिटी के सस्कृत विभागाध्यक्ष डा० लूडोरोचर से सपर्क स्थापित कर प्रस्तुत काव्य के लिए भूमिका लिखवाई है, अत. उनका सहयोग भी मेरे आल्हाद का कारण बना है बस, मुझे अपने हितैषीजनो का समय-समय पर ऐसा ही सौहार्द प्राप्त होता रहे, यही कामना करता हूँ।

## अन्यान्य सहयोगी

इसी प्रकार मुनि श्री मधुकरजी ने भाई श्री जुगलकिशोरजी भोजक द्वारा इस काव्य की धारणा करवाकर मेरे श्रम को हल्का बनाया। मुनि श्री धर्मरुचिजी ने इस काव्य के पारिभाषिक शब्दो की तात्पर्य-युक्त शब्द सूची बनाकर जैनेतर पाठको के लिए इस काव्य को सहज पठनीय बना दिया है। इन सभी सहयोगियो के प्रति मैं हृदय से कृतज्ञता ज्ञापित करता हूँ। अन्त मे मेरी इस सहज बुद्धि-गम्य कृति को गुण-ग्राही सहृदय कविजन स्वीकार करते हुए मेरा उत्साह बढाएगे, ऐसा मुझे पूर्ण विश्वास है।

सवत् २०२८ वैशाख कृष्णा-द्वादशी —चन्दन मुनि

सरदार शहर।

# अनुवादकीय

**आधारभूत माध्यम**

मानव जति की उन्नति मे साहित्य का अनन्य सहयोग रहा है। मानव-समाज साहित्य के आधारभूत माध्यम से ही इतना सुसम्कृत और सभ्य बना है। उसके हर आरोहण मे साहित्य ने महत्वपूर्ण भूमिका निभाई है। साहित्य के द्वारा ही उसका अतीत सुरक्षित रहा है। दर्शन, धर्म, सस्कृति, विज्ञान सभ्यता आदि सभी विषयो का विकास साहित्य की सुदृढ नीव पर ही हुआ है तथा हो रहा है। साहित्य जहाँ अतीत को संजोकर रखता है, उसी तरह वर्तमान को प्रकाशित करता है और भविष्य की उजली रेखायें खीचता है।

**साहित्य का प्रयोजन.**

साहित्य-मर्मज्ञो और विद्वानो ने साहित्य के अनेक प्रयोजन बताए हैं। पर उसका अन्तिम लक्ष्य आत्म-दर्शन, अनन्तशान्ति, पूर्ण विकाश की उपलब्धि है।

आध्यात्मिक प्रतिष्ठा ही साहित्य का साध्य हो सकता है, क्योकि सारी भौतिक समृद्धिया अस्थायी और क्षरण-शील है। साहित्य अविचल तथा अविकल का साधक है।

**सर्वश्रेष्ठ भाषा :**

"सस्कृत भाषा ससार भर की भाषाओ मे श्रेष्ठ है। हमारा सस्कृत साहित्य समग्र सभ्य साहित्यो से प्राचीनता, व्यापकता तथा अभिरामता मे बढकर है। यदि इस भूमि-वलय पर कोई भी भाषा सब से प्राचीन होने की अधिकारिणी है, तो यही हमारी सस्कृत भाषा ही हैं।

'भारत मे तो सस्कृत की बहुत गरिमा रही, इसे राजभाषा की मान्यता दी गयी। विक्रम के आरम्भ से लेकर १४ वी शताब्दी तक अनेक भारतीय राज्य यहाँ बने रहे जिनमें सस्कृत राज-भाषा के रूप मे व्यवहृत होती थी।'[1]

---

१ सस्कृत साहित्य का इतिहास

**विशालता :**

"संस्कृत साहित्य विपुल मात्रा मे लिखा गया है, इसे भारत के विद्वान ही नही, पाश्चात्य विद्वान भी स्वीकार करते है।

पश्चिमी विद्वानो का कहना है कि सस्कृत साहित्य का जो अश छपकर प्रकाशित हुआ है वह भी ग्रीक और लैटिन साहित्यो के समग्र ग्रन्थो से दुगुना है, जो अभी तक हस्तलिखित ग्रन्थ के रूप मे पडा हुआ है या किसी प्रकार नष्ट हो गया है उसकी तो गणना ही अलग है"।[२]

**भारतीय संस्कृति का वाहन**

"सस्कृत साहित्य भारतीय सस्कृति का प्रधान वाहन रहा है। भारतीय संस्कृति का प्राण आध्यात्मिक भावना है, त्याग से अनुप्रणित, तपस्या से पोषित तथा तपोवन मे सर्वधित भारतीय सस्कृति का रमणीक आध्यात्मिक रूप सस्कृत भाषा के ग्रन्थो मे अपनी सुन्दर झाकी दिखाता हुआ सहृदयो के हृदय को बरबश खीचता है"।[३]

जैन आचार्यो एव मुनियो ने प्राकृत, सस्कृत, अपभ्रश, तमिल, कन्नड और हिन्दी आदि विभिन्न भाषाओ मे प्रचुर मात्रा से साहित्य लिखा है। वह क्रम वर्तमान मे भी चालू है।

जैनो का समग्र दार्शनिक साहित्य सस्कृत भाषा के माध्यम से ही पल्लवित-पुष्पित हुआ है। काव्य, व्याकरण और कोष आदि सभी साहित्यिक प्रकारो मे जैनो ने अपनी लेखनी खुलकर चलाई है।

उनके अर्थ-गभीर और भाषा लालित्य से परिपूर्ण साहित्य का अतिशय मूल्याकन हुआ है।

तेरापथ ने भी सस्कृत साहित्य के भडार को भरने के लिए उल्लेखनीय हाथ बढाया है। गद्य-पद्य मे अनेक महत्वपूर्ण कृतिया विनिर्मित की हैं।

अभिनिष्क्रमण महाकाव्य युगप्रधान आचार्य श्री तुलसी के सतीर्थ्य मुनि श्रीचन्दनमलजी की सस्कृत गद्य मे एक ऐतिहासिक रचना है। इसमे तेरापन्थ के प्रवर्तक आचार्य श्रीभिक्षु के जन्म से लेकर स्थानकवासी सम्प्रदाय से अलग होने तक के इतिवृत्त का सजीव चित्रण है।

---

२ सस्कृत साहित्य का इतिहास

३ सस्कृत साहित्य का इतिहास

काव्य मे भावपक्ष और कलापक्ष दोनो का सुन्दर समन्वय है। कवि ने तत्त्व, प्रकृति, ऋतु, मनोभाव आदि का मार्मिक विवेचन किया है। भाषा भी सरल सुवोध है।

सत्य के लिए कवि की अडिग आस्था है। उसके विषय मे अपना अभिमत व्यक्त करते हुए कवि ने वारहवे समुच्छ्वास के प्रारम्भ मे ही कितना तथ्यपूर्ण कहा है—" सत्य ही सत्य है, सत्य ही शिव है और सत्य ही सुन्दर है, इस को सभी विद्वत्-शिरोमणि जानते हैं और बताते हैं तथापि सरल होते हुए भी उसका अनुशीलन प्राय मनुष्य नही कर सकते। फल-निष्पत्ति मे सुन्दर होते हुए भी वह प्रारम्भ मे सत्यप्रिय के धैर्य की परीक्षा लेने का इच्छुक-सा प्राय. थोडा कटु होता है। इसीलिए उसके अखण्ड लाभ पर दृष्टि लगाने वाले सत्यान्वेषी मनुष्य को पहले उसके प्रति पूर्ण विश्वस्त होना चाहिए।"

इसीप्रकार विचारभेद और विचारऐक्य की महत्ता पर ग्यारवें समुच्छ्वास मे लिखा है"—विचार भेद सुदृढ एकता के सूत्र मे बधे हुए राष्ट्रो मे भी भेद डाल देता है। विचारो की एकता से ही एक धागे मे पिरोए हुए मणको की तरह हजारो आदमी परम प्रेम से साथ मे रह सकते हैं।"

प्रत्येक वस्तु का मूल्य अवसर पर है, विना समय हर चीज विषम बन जाती है। अवसर पर जरा सी भी वह फलदायक सिद्ध होती है। इस तथ्य को वडे रोचक व मर्मस्पर्शी ढग से कहा गया हैं। जैसे—

"हन्त अनवसरेऽमृतमपि विषायते, विषमप्यवसरप्रयुक्तममृतमतिरिच्यते। एकमेव वस्तु महद्धस्तोपढौकितं सन्महर्घ्यत्वमालिङ्गति, वहुमूल्यरत्नमपि कौलटनेयकरक्रोडस्थ शतमूल्यमपि नार्हति। अवसरे प्रयुक्तमेकमपि सूक्त स्वात्या शुक्तिगत पानीयपृषदिव मौक्तिकतामाराधयत् सेवते सार्वभौमाना मञ्जुलमुकुटानि।"

भारतीय सस्कृति त्याग प्रधान है। धर्म की उत्पत्ति व्रत सयम से ही होती है। कवि ने अच्छे ढग से इसकी व्याख्या वारहवे समुच्छ्वास मे प्रस्तुत की है—"व्रतो मे ही धर्म है अव्रतो मे नही। दया मे ही धर्म है, हिंसा मे नही। हृदय परिवर्तन करने वाले उपदेश से ही धर्म है और बल प्रयोग से नही। धर्म आत्मा से ही पैदा होता है और स्वर्णरुप्यक आदि द्रव्य से नही। ये सार्वजनिक सार्वभौम सर्वज्ञ के सिद्धान्तो मे प्रसिद्ध सिद्धान्त है।"

समाज मे दो प्रकार के कार्य चलते है—पारमार्थिक और व्यावहारिक। दोनो का अपना अलग-अलग मूल्य है। दोनो को उलट पुलट कर दिया जाये तो महान अनर्थ हो जाता है। काव्यकार ने बडी हृदयग्राही उपमा के साथ इसे प्रस्तुत किया है—"जीभ की औषधि यदि आँखो मे डाल दी जाय और आँखो की दवा यदि जिह्वा पर लगा दी जाय तो जीभ फट जाती है और आँखे फूट जाती हैं। वैसे ही पारमार्थिक कार्य को व्यवहार मे और व्यावहारिक कार्य को पारमार्थिक मे डाला जाता है तो दोनो का ही विनाश हो जाता है।'

ऋतु वर्णन मे भी कवि ने अपनी लेखिनी को सशक्त बनाया है। ग्यारवे समुच्छ्वास मे शीत ऋतु का वर्णन बडा सरस किया है, जैसे—

"समस्त-वस्तु-विसरं लघु-हिमकण-मौक्तिकैर्मण्डयन्निव, प्रचण्डोऽपि रोषो न क्षान्ति-शक्त्याहत स्थातु शक्तः इतीव निजापरिमेय-शीतलतयोष्णता निर्गमयन्निव, न सर्वत्र समेषा सदृशी सपर्येति धूमयोनेरवमाननामभिव्यञ्जयन्निव, चिरबद्धकपाटाना गर्भ-गृहाणा द्वाराण्युद्घाटयन्निव, कामेन सह शीतेन कम्पमानतनुना प्रवासिना पत्या विरहिणी श्यामा स्मारयन्निव, पुष्टिकृते वाताद-पिस्तका-हिफेनबीज-घुसृणाम्बर - देवकुसुम-शुण्ठि - सितोपलादि-पोष्टिक-द्रव्य-मिश्रितान् मुद्ग-माष-दालि-मोदकान् धन्यान् भोजय-न्निव, सुलभसर्ववस्तूना सौभाग्यभाजा पूर्णसम्माननीयः शीतर्तुः समाजगाम।"

इसी प्रकार वसन्त ऋतु का भी चित्र खीचते हुए चौदहवे समुच्छ्वास मे कवि ने कहा है—

मन्द-मन्द वहमानेन मधुमासपवनेन माधुर्येणेव सिक्तः सर्वोऽपि जीवलोक। चित्रम्! अप्राप्तवर्षापि वनराजि केवल चैत्रिक-श्वसनेनाऽनुप्राणिता कृतकायकल्पेव स्वजीर्णशीर्णानवयवान् पृथक् कृत्वा नवपल्लवती, पुष्पवती चाजनि! प्राप्तनवमञ्जरीभिः सुरभितः सहकार कोकिलाना काकलीभिर्भूमावेव स्वर्गमवतारयामास। कटुसत्यकथकसोदरो निम्बोऽपि चुल्लान् कोष्ठगतोष्णिमनिहन्त्री-स्वकटु मञ्जरीपानाय निमन्त्रयामास। वर्षास्वपल्लवितोऽपि यवासो

वसन्तर्तु-कृपासुधासिक्तो विकस्वरमुख प्रोन्नतकन्धरो विललास। अस्ति पुष्पफलोऽहमिति नाऽपत्रपिष्णुनाऽभावि पत्रशून्यशरीरेणापि करीरेण। परिपक्वप्रायाणि वप्रेषु विलसन्ति स्म शूकधान्यानि। पीतता प्राप्ताश्चणकक्षुपा क्षपानाथज्योत्सनया लब्धसौवर्णकान्तयो दीप्यन्ते स्म।"

इस प्रकार प्रस्तुत काव्य विविध वर्णनो से भरापूरा एक भण्डार है। आशा है पाठको के लिए रोचक सामग्री उपस्थित करेगा।

इसका हिन्दी अनुवाद मैने किया है। किसी भी भाषा के अनुवाद का कार्य जटिल होता है। मैंने सर्वप्रथम साहित्य परामर्शक मुनि श्री बुद्धमलजी के संस्कृत काव्य 'उत्तिष्ठत जाग्रत' का हिन्दी रूपान्तर किया था। तदनन्तर कई पुस्तको का अनुवाद किया। प्रस्तुत अनुवाद कैसा है, इसका निर्णय तो पाठकजन के हाथ मे ही है।

मुनिश्री एक अच्छे साहित्यकार है। उन्होने प्राकृत, संस्कृत, हिन्दी, राजस्थानी आदि विभिन्न भाषाओं मे साहित्य सृजन का प्रभूत कार्य किया है। आशा करता हूँ प्रस्तुत रचना का सम्यक् समादर होगा।

१०, कैनिग स्ट्रीट
वेद भवन, कलकत्ता-१

—मुनि मोहनलाल 'शार्दूल'

सर्वेन्द्रियसंयम-साधनासंलग्न-मीठालाल मुनेः—

# अभिमतम्

साधनाप्रवणेन पटुव्यवहारचणेन धिषणाधनेन मुनिना 'चन्दनेन' 'गुम्फितमभिनिष्क्रमणाख्य' सप्तदशसमुच्छ्वासमय' गद्यकाव्य प्रारम्भप्रान्त मननपुरस्सर पठित्वा मम स्वान्त अत्यधिक कान्त समजनि। तेरापन्थ-प्रवर्त्तक महामनसमाचार्यकिरीट 'भिक्षुस्वामिन'-मधिकृत्य सन्दृब्धमेतत् काव्य महाकाव्य-तुलामधिरोहति। काव्यस्याऽस्य सरससरलललिताऽभिनवभाषाप्रवाह स्वस्याऽद्वैतीयीकतामाविर्भावयन् पाठकाना चेतासि सद्य स्ववशीकरोतितमाम्। यथार्थताचित्रणपरायणा सर्वत्राऽश्लथा विशदाऽस्य वर्णनशैली प्रारम्भोपान्तसदृशी स्वक्षेत्र सर्वथाऽधिकृतवती। कश्चिदेनत् पठितुमारभेत तदानी न तस्य पिपठिषा उपन्यासस‍ाहित्यवद् मध्ये विरन्तु विहितवशा स्यात्। ऋतु-पर्वत-काननादि-प्राकृत-दृश्याना-मनुभवपरिप्लुतेन सहजवर्णनेन समलङ्कृत काव्यमिद ग्रन्थित्वा विदुषा लेखकेन न केवल स्वस्याऽदुष्प्यवैदुष्यमाविष्कृत, पर सस्कृत-साहित्यायाऽद्भुतमभिनवममरफल प्राभृतीकृतम्। पुराऽपि लेखक-महोदयेन 'आर्जुनमालाकारम्, 'प्रभव-प्रबोधाख्य' गद्यकाव्य-द्वय विरचय्य सुरसरस्वतीसाहित्यस्य श्रिय प्रकाममभिवृद्धिर्व्यधायि। लेखकस्य गद्यकाव्यत्रयीमधीत्य गद्यकाव्यरसज्ञो लेखक प्रति सहज-श्रद्धालु स्यादिति स्वाभाविकम्। लेखकोऽवरुद्धप्रवाहा श्रुतदेवी समुज्जीवयितु कृतसकल्पोऽस्तीति स्फुट प्रतीयते। लेखक आयताःवेतादृशानि युगभावसन्दृब्धानि कियन्ति काव्यानि, महाकाव्यानि च निर्माय काव्यरसज्ञेभ्य समर्पयिष्यति तदायतिरेव ज्ञापयिष्यति।

विक्रमाब्द २०१७<br>
माघशुक्ला त्रयोदश्याम्<br>
आमेट (राजस्थान)

—मुनि मीठालाल

सर्वेन्द्रियसंयम-साधना संलग्न मुनिश्री मीठालालजी का—

# अ भि म त

साधनाशील, व्यवहारपटु, प्रतिभावान् मुनिश्री चन्दनमलजी द्वारा विनिर्मित सप्तदशसमुच्छ्वासमय 'अभिनिष्क्रमण' नामक गद्यकाव्य को मैने आद्योपान्त मननपूर्वक पढा । मेरा मन परितृप्त हो गया । तेरापथ के प्रवर्तक महामनस्वी आचार्य शिरोमणि श्रीभिक्षुस्वामी को लक्ष्य करके लिखा गया यह काव्य महाकाव्य के समान प्रतीत होता है । इस काव्य का सरस, सरल और अस्खलित भाषा-प्रवाह अपने अनूठेपन के कारण पाठको के हृदय को तत्काल खीच लेता है । यथार्थता का चित्रण करनेवाली अशिथिल और विशद इसकी वर्णन शैली आदि से लेकर अन्त तक एक समान रोचक है । कोई इसका अध्ययन प्रारम्भ करे तो उसकी पढने की चाह उपन्यास साहित्य की तरह विना पूर्ण पढ़े वीच मे विराम लेना नही चाहती । विद्वान् लेखक ने ऋतु, पर्वत, कानन आदि प्राकृत-दृश्यो का अनुभव से परिप्लुत और सहजवर्णन से अलकृत यह काव्य वनाकर न केवल अपने प्रकाण्ड पाडित्य का परिचय दिया है, अपितु सस्कृत-साहित्य को एक अद्भुत अभिनव अमरफल भेट किया है । लेखक महोदय ने पहले भी 'आर्जुनमालाकारम्' और प्रभवप्रबोध काव्यम्' नामक दो काव्यो की रचना कर सस्कृत साहित्य की पर्याप्त अभिवृद्धि की है । लेखक के तीनो गद्यकाव्य का अध्ययन करके गद्यकाव्य का रसिक लेखक के प्रति सहज श्रद्धालु हो यह स्वाभाविक है । लेखक देव-वाणी के अवरुद्ध प्रवाह को पुनरुज्जीवित करने के लिए कृत-संकल्प है—ऐसा स्पष्ट प्रतीत होता है । लेखक भविष्य मे युगीनभावो से परिपूर्ण कितने काव्य और महाकाव्यो का निर्माण कर काव्यरसज्ञो को समर्पित करेगा यह भविष्य ही वताएगा ।

वि० स० २०१७
माघशुक्ला त्रयोदशी
आमेट (राजस्थान)

—मुनि मीठालाल

## प्र का श की य

भापा के किमी एक विगिप्ट कवि ने क्या खूब कहा है—

'सवल क्षमा, निर्मद धनी, कोमल विद्यावत ।
भूमि-भूपण तीन ये, उपजत-खपत अनत ।।

सच है, जन्म से और मृत्यु से कोई व्यक्ति महान् नही वनता, क्योकि प्रतिसमय अनतप्राणी उत्पन्न होते है और नष्ट होते है। हॉ, किसी विगिप्ट-गुण के द्वारा ही मनुष्य अपने व्यक्तित्व को उभारता है, चमकाता है एव असाधारण उज्ज्वलता को अवकाश देता है। पूज्य पिता श्रीमोहनलालजी वैंगाणी कुछ अनूठी विशेपताओ के धनी थे। आपका जन्म विक्रम स १९६० माघ कृष्णा अष्टमी को राजस्थानान्तर्गत वीदासर मे हुआ था। जव आपकी आयु ५ वर्ष की थी, तभी आपके पिता श्री सुजानमलजी का स्वर्गवास हो गया था।

### विद्या के प्रेमी

वाल्यकाल मे ही आपको विद्याभ्यास के लिए तीव्र उत्कठा थी। आपने अग्रेजी मे मेट्रिक तथा सस्कृत की प्रथमा परीक्षा अच्छे नम्वरो से उत्तीर्ण की थी।

### तीन 'वकार' का योग

विद्या के साथ-साथ आपमे विनय एव विवेक भी विगद वनता जारहा था। आपका नम्र तथा कोमल व्यवहार सभी को आकृष्ट किये

हुये था। आप वकालत भी पढना चाहते थे, पढना प्रारम्भ भी कर दिया था, लेकिन स्थिति की अनुकूलता न होने के कारण उसे छोड़कर अपने ज्येष्ठभ्राता श्री सोहनलालजी बैगाणी के साथ कलकत्ते मे व्यापारिक कार्य मे भाग लेने लगे।

**धार्मिक एवं सामाजिक**

आप श्रीजैन श्वेताम्बर तेरापथी महासभा के प्रतिष्ठाताओ मे से एक थे। सभा की उन्नति के लिए आप आजीवन विशेप प्रयत्नशील वने रहे। आपका विवाह वि० स० १६७६ मे सम्पन्न हुआ था। आप शरीर से कोमल, सुडौल एव सुन्दर थे। विधियोग से युवावस्था मे ही आपकी धर्मपत्नी (मेरी माताजी) का वियोग हो चुका था। पारिवारिकजनो का अत्यन्त आग्रह होते हुये भी आपने फिर से विवाह करना स्वीकार नही किया, यह आपकी अतरग वैराग्यवृत्ति का परिचायक था। कुछ समय के बाद तो आपने आचार्यश्री की साक्षी से आजीवन ब्रह्मचर्य भी अगीकार कर लिया था। आपने अपने जीवन का समय ज्यादातर धार्मिक एव सामाजिक विशिष्ट कार्यो मे लगा दिया। आप वडे ही धैर्यवान एव मिष्टभाषी थे। अनेक लोग आपसे सामाजिक एव व्यावहारिक समस्याओ का समाधान पाने के लिये भी आया करते थे। आप उनको उचित मार्गदर्शन देकर उनकी उलझन भरी समस्याओ का समाधान करते थे।

आपकी विचारधारा अत्यत पवित्र तथा धार्मिक भावनाओ से ओत-प्रोत रहती थी। आप हर एक को स्पष्ट कहने मे कतराते नही थे। पर आपके कहने का ढग वडा ही कोमल एव स्नेहभरा होता था। अत सुननेवालो को वह सहजतया हृदयगम हो जाता था। श्रावक के १२ व्रतो को आप वडे विवेचन के साथ पहले से ही धार चुके थे। सत-सतियो की सेवा मे आप हमेशा अग्रणी रहा करते थे। तात्विकज्ञान की आपको विशेप अभिरुचि थी। सस्कृत भाषा के कुछ अभ्यासी होने के कारण सस्कृत के अनेक पद्य आपने

कण्ठस्थ किये थे। अक्षरलिपि भी आपकी सुन्दर थी। आपने सस्कृत के अनेक पद्य धार-धार कर लिपिवद्ध भी किये थे। आपको प्राचीन एव अर्वाचीन घटनास्थलो का विशिष्ट ज्ञान था। हम वालको को भी समय-समय पर वडो मधुर एव हितकारी शिक्षा दिया करते थे। वस्तुत आप अन्यन्त ही सतोपवृत्ति वाले आत्मार्थीविज्ञ-पुरुप थे।

### समाधिमरण

वि० स० २००३ मे आप पुन राजयक्ष्मा (T B) से पीडित हो गये थे। उपचार लागू न होने के कारण आपका शरीर दिन-प्रतिदिन क्षीण होता गया। किंतु धैर्यअविचल रहा। आपने कभी मु ह से 'ओह, हाय' शव्द नही निकाला। आप निरन्तर 'अरिहत देव, भिक्षुस्वामी' जपते रहते थे। प्राप्त वेदना को समभाव से सहने का आदर्श सचमुच सभी के सामने आपने प्रस्तुत किया था। धार्मिक गीतिकाए तथा आराधना आदि सुनने की आपको विशेप रुचि रहा करती थी। अतिम समय मे मुनिश्री चपालाल जी का सान्निध्य पाकर विशेप त्याग-प्रत्याख्यान कर लिए थे। अत मे वडी समाधि के साथ ४४ वर्प की अवस्था मे इस नश्वर शरीर का परित्याग कर दिवगत हुए।

### खरे श्रावक

जव आपके देहावसान का समाचार आचार्यश्री तुलसी ने सुना तो आपने उनकी अनेक विशेपताओ का उल्लेख करते हुए उन्हे "खरे श्रावक" कहकर सम्वोधित किया। ऐसे सुसस्कारी एव गुणी पिता पाने का मुझे गौरव है।

### पावन स्मृति मे

मेरी वहुत वर्पो से यह हार्दिक अभिलापा थी कि पूज्य पिताश्री की पावन स्मृति मे उनकी अतरग रुचि के अनुसार कोई एक सत-साहित्य को प्रकाश मे लाकर उनकी साहित्य-निष्ठ लोकोपकारी भावना को साकार वनाया जाय। सौभाग्य से अध्यात्म-साधनारत

साहित्य-सेवी मुनिश्री चन्दनमलजी का चातुर्मास हम वम्वईवासियो को फिर से मिल गया। हम फूले न समाये। उनके तात्त्विक व्याख्यानो को सुनने का आनन्द मिला। साथ-साथ सतत प्रवहमान उनके साहित्यरूपी सुरसरिता का प्रवाह भी हमे अतरग शीतलता प्रदान करने लगा। तव स्वत यह प्रेरणा जगी कि क्यो न मुनिश्री के सत् साहित्य-प्रकाशन के कार्य मे यत्किचित् सहभागी वना जाय। फलस्वरूप 'अभिनिष्क्रमण महाकाव्यम्' के प्रकाशन का सौभाग्य पिताश्री की पावन स्मृति मे मुझे मिला। क्योकि मेरे पिता श्री स्वामीजी के अयन्य श्रद्धालु भक्त थे। मुझे भी तो सचमुच स्वामीजी ही नवजीवन देनेवाले है, ऐसा एक मरणान्तकष्ट मे अनुभव हुआ था, स्वामी जी के प्रति मेरे मन मे अगाधभक्ति का एव श्रद्धा है। अत स्वामीजी से सम्वन्वित काव्य को प्रकाशित कराने का विशेप आकर्पण होना भी स्वाभाविक है। आखिर इस कार्य को हाथ मे लिया। भाई श्री ब्रह्मदेवसिह जी का इस साहित्यिक कार्य मे असाधारण सहयोग रहा, वर्ना मेरे जैसे व्यापारिक कार्यव्यस्त व्यक्ति के लिए ऐसा कार्य अवश्य कुछ कठिन पड जाता। वैसे ही प्रकाशन मे श्री श्रीचन्द सुराना 'सरस' का सहयोग प्रशसनीय रहा। इसीप्रकार प्रत्यक्ष एव अप्रत्यक्ष रूपेण सहयोगियो के प्रति कृतज्ञता ज्ञापित करता हुआ मै इस काव्य रूपी अमूल्य भेट को लेकर प्रस्तुत हू।

वीदासर

(वि० स० २०२८)

—झूमरमल वेंगानी



## PREFACE

I am very happy to have been invited to write a short preface to the new mahakavya composed by Muni Chandanmalji. I had the pleasure to meet Muni Chandan in Bombay in December 1963, and have been impressed by his learning and his versatility in Sanskrit

My personal acquaintance with the Jain Swetamber Terapanth sect goes back to 1953, when I had the opportunity to spend about two weeks in the presence of Acharya Sri Tulsi and several Terapanthi Munis in Beawar [Rajasthan] These two weeks have remained an unforgettable experience in the life of a student of Indian culture and Indian religion I remember the periods of discussions with the Acharya and some of his learned Sadhus There were also the young bright Sadhus who received their training under the guidance of the Acharya and the older Munis Perhaps most impressive of all were the addresses by Acharya Sri Tulsi to hundreds of simple villagers, who came a long way to have his darshana and to listen to his words

Muni Chandanmalji, who was born in the Punjab about sixty years ago, is the author of several works in Sanskrit, in Prakrit, and in Hindi. If I remember correctly, I read the first publication by Muni Chandan nearly ten years ago : his charming booklet entitled **Antardhvani** [published by Atmaram and Sons, 1962]

The present work is what we might call an historical kavya. It tells the story of the founder of the Terapanth sect, who, although he had been initiated in the Sthanakvasi sect, left the latter about 1760, more than two hundred years ago The first Western scholar ever to describe the separation of

both sects was probably Hermann Jacobi. In an article on Jainism, published by the German periodical "Archivfur Religioswissenschaft" in 1915, Jacobi briefly mentioned the separation of the Terapanthis from the Sthanakvasis

At that time Jacobi referred to the Terapanthis as "a sect which is practically unknown in the West" The situation has changed drastically since 1915. Especially under the impulse of the present Acharya, Acharya Sri Tulsi, the Terapanthis have become well known in the Western world, through an impressive number of publications The place of honour should undoubtedly be given to the Acharya's own **Jainasiddhanta-dipika** [with a Hindi translation by Muni Nathmalji], a concise but lucid treatise on all aspects of Jaina philosophy, written in the true traditional sutra style. I have used this volume myself, to teach European and American students the principles of Jainism. It is to be regretted, that there is not yet a good English translation of the Dipika Dr Satkari Mookerji announced a translation in the foreword to the book, yet, as far as I know, it has never been published

I should also mention the voluminous publications sponsored by the Anuvrata Samiti, not only on the Anuvrata Andolan itself [again a creation of Acharya Sri Tulsi], but on all aspects of Jaina thought A few pamphlets on the Anuvrata Movement have been published in English, this, together with the sympathetic support by a number of prominent figures such as the then President Rajendra Prasad and Vice President Radhakrishnan, made the movement and its publications known not only throughout India, but abroad as well

In the present volume Muni Chandan provides us with another document that will make the Terapanth sect and its history better known in India and among Indologists abroad. He describes in beautiful and clear Sanskrit prose the **abhiniskramanam** of Acharya Sri Bhiksu, his courage and determination to live as a true Jain Sadhu, in strict accordance with the Jain canonical scriptures, even if this meant disagreement with his

own Guru, who had initiated him into the Sthanakvasi sect. It is an interesting story, which at the same time clarifies the basic peculiarities of the Terapanthis. As such, it is bound to become an important document for all those interested in Jainism in general, and in the origin and development of the Jaina sects in particular  A complete history of the Jaina sects is still to be written, Muni Chandan's work will perhaps incite a scholar in India or abroad to undertake this useful task  I know that Acharya Sri Tulsi, Muni Chandanmalji, and the other Terapanthi Munis will provide all help they can

Finally, Muni Chandan's book demonstrates once again that the tradition of elegant Sanskrit composition is still very much alive among the learned in India. In this field too, the Terapanthis have been very active  The Acharya and several munis have a thorough knowledge of Sanskrit and Ardhmagadhi literatures, and they speak both languages fluently  They also maintain among themselves and develop among their students the capability to compose in both languages in verse and in prose  Keeping up these traditions in modern times is a difficult task, even among Sadhus

Muni Chandanmalji deserves to be congratulated on his achievement  Sanskrit scholars all over the world look forward to reading other works by him in the future. Some of these works have already been written, and merely await publication

**Ludo Rocher**
*Professor of Sanskrit*
Chairman, Department of Oriental Studies
*University of Pennsylvania*
PHILADELHIA, U. S  A

# अनुक्रमणिका


| | | | |
|---|---|---|---|
| १. | प्रथम समुच्छ्वास | | १ |
| २. | द्वितीय. | ,, | १४ |
| ३ | तृतीय | ,, | २६ |
| ४ | चतुर्थ | ,, | ५० |
| ५ | पञ्चम. | ,, | ६० |
| ६ | षष्ठ | ,, | ७८ |
| ७ | सप्तम | ,, | ९२ |
| ८. | अष्टम. | ,, | १०६ |
| ९. | नवम. | ,, | १२२ |
| १०, | दशम | ,, | १३८ |
| ११ | एकादश. | ,, | १५२ |
| १२ | द्वादश | ,, | १५२ |
| १३ | त्रयोदश. | ,, | १५८ |
| १४ | चतुर्दश· | ,, | १८२ |
| १५ | पञ्चदश | ,, | २०८ |
| १६ | षोडश | ,, | २२२ |
| १७ | सप्तदशः | ,, | २३८ |
| ● | परिशिष्ट | | २६१–२६८ |


★

॥ अर्हम् ॥

## प्रथमः समुच्छ्वासः

प्रशस्तये-काव्यद्वयम्

**उपजाति-वृत्ते**

(१) अपेक्षिता यस्य महीयसीह दृग्,
न्यग्राहि तस्मात् कुनयैर्न यद्वचः।
वाण्यां तत प्रस्फुटिता विरागता,
देवाधिदेवाय नमोनमस्तत ॥

(२) प्रतिष्ठिता प्राणपणेन साधुता,
मायाविनामुद्यदसाधुता धुता।
मनस्विमूर्धन्यमनन्यधीसखं,
तं भिक्षुराजं स्मृतिमार्गमानये ॥

**काव्यारम्भः**

विभावितमथान्यदा विभावर्या व्यवहारकोविदेन अन्तेवासिना चिन्ता-हिमानीहतमिव विमनायित विभोर्वदनारविन्दम्। तद्रहस्य-मन्वेष्टुकामो नित्यमवामो भिक्षुर्ननु 'रघुनाथ' इत्याख्यया प्रख्यात-माचार्यचरणमुपेयिवान्। विदधद् राद्धान्तपद्धत्या पृथ्वीचुम्बिप्रणामान्

## पहला समुच्छ्वास

### मगलाचरण

जिनकी महान् दृष्टि अपेक्षामयी थी, इसलिये उनके वचन (निरूपण) को कुनय (निरपेक्ष सिद्धान्त) निगृहीत नही कर सके, इसीकारण उनकी वाणी मे विरागता (रागशून्यता) का श्रोत फूटा। इसी कारण वे देवाधिदेव कहलाए, इसीलिये उनका बार-बार अभिनन्दन है।

दम्भीजनो ने जिस असाधुता को प्रसारित कर रखा था, उसे मिटाकर प्राण-पण से जिन्होने शुद्ध-साधुता की प्रतिष्ठा की, उन मनस्वि-मूर्धन्य अद्वितीय मेधावी श्री भिक्षुराज की स्मृति करता हूँ।

### • काव्यारम्भ

एकवार रात्रि के समय व्यवहार-निष्णात अन्तेवासी शिष्य ने अपने आचार्य का चिंता-हिम से आहृत अन्यमनस्क वदन-कमल देखा। इस चिता के रहस्यान्वेषण के इच्छुक सदा गुरुदेव के अनुकूल रहने वाले, भिक्षु (आचार्य-भिक्षु) शीघ्र ही रघुनाथ नाम के प्रख्यात गणनायक के समीप पहुचे। सिद्धान्तो मे वर्णित पद्धति से पृथ्वीचुम्बी प्रणाम करते हुये बद्धाजलि होकर विनय-गर्भित वाणी से पूछने लगे।

मुकुलित—पाणिर्विनय - भारवत्या भारत्या पिपृच्छिषाञ्चकार— "देव ! कस्मिन् विचार - वाहिनी - प्रवाहे प्रवाहितं भवता स्वान्तं विलोक्यते ? यदत्रभवता ललाट - पट्टे कामपि गभीरां भावभङ्गीं बिभ्रती विभ्राजतेतरां मुहुरूर्ध्वाधो विलोला त्रिवली। अलक्षितलक्ष्या प्रतिक्षणमितस्ततो—निरीक्षमाणा सार्थ - भ्रष्ट - हरिणाऽक्ष्णोर्वर्त्म कक्षीकुर्वाणा प्रतिहतेक्षणयुगली ।[१] स्फुरदोष्ठ-कोष्ठेऽपि नहि पोस्फुरीति प्रेङ्खद्धासस्यैकापि रेखा। आलस्य-लास्यं चारभमाणा वदन - सदनादुज्जृम्भन्ते पौन पुन्येन जृम्भा। को नामाऽत्र हेतुरिति प्रवेदितुमनर्हं पृच्छा - प्रागल्भ्यमातनोति नूनमयं शिशुः। उपतिष्ठते च तज्जिज्ञासुर्यदि भवन्तो नानुभवन्ति किमप्यसाम्प्रतं साम्प्रतम्।"

यत्पुरतः कथनं व्यथनं दूरयिष्यतीति निश्चिन्वानेन तत् कालमुरुणा प्रेम्णा गुरुणा गदितुमारेभे—"वत्स ! कुशलोऽसि यन्मच्चेतसि चरिष्णु चिन्ताचक्रवालमाकलयितुमलबभूविथ। इङ्गिता-कार - संपन्नानां विलक्षणं लक्षणं त्वयि सुजाघटीतीति नारेकः। आधिपत्यं पदविभाजनेनाऽऽधीनां[२] पतित्वमुररी[३]करोतीत्य-नुभववतां विश्रुता जनश्रुतिः सत्येति मे प्रतीति - गोचरतामगात्। प्रत्यहमभव्या भव्याश्च कतिचन नव्या-नव्या समाचारा मस्तिष्क-मन्दिरमनुप्रविशन्ति दुष्प्रतीकाराः। हन्त ! जटिलतमा जाता जगतामद्यतनी जीवन - पद्धतिः। शैथिल्यं सेवते ग्लास्नूनामग्-नेष्विव श्रद्धास्पदेष्वपि श्राद्धानां श्रद्धा। उन्निद्रा दरीदृश्यते दमिनामप्यवद्यान्वेषणपरा गृध्राणामिव दम्भिनां दृष्टिः। अलब्धाऽऽलोक - सम्पर्काण्यन्धानामिव शुष्कतर्कमद्रुपर्कं कर्तुकामा भृशमुन्मिपतितरामसाधूनां धिषणा। अतीरणीया खलु प्राप्तरया

---

१ नेत्रयुगलम्। २ मानसीव्यथानाम्। ३ स्वामित्वम्।

"देव ! आज आपका हृदय किसी विचारो की नदी के प्रवाह मे प्रवाहित हो रहा मालुम पडता है, क्योंकि आपके ललाट पर किसी गंभीर भावभङ्गी को धारण करती हुई; कभी ऊर्ध्व और कभी अध होती हुई त्रिवली चंचल हो रही है। प्रतिक्षण इधर-उधर देखती हुई यूथभ्रष्ट लक्ष्यहीन हरिणी की आंखो का अनुसरण करती हुई आपकी आंखे स्तव्ध हैं। स्फूर्त होते हुए भी अधरो पर कोई मुस्कान रेखा नही उभर रही है। आलस्य का नर्त्तन करती हुई मुख मे वार-वार जँभाइयां आ रही हैं। इन सबका क्या कारण है ? यह जानने मे असमर्थ शिष्य पूछने को उत्सुक है। आप यदि किंचित् भी अनुपयुक्त नही मानते हो तो इन सबका जिज्ञासु आपके सम्मुख उपस्थित है।"

इसके आगे कही वात व्यथा को दूर करेगी, यह निर्णय करते हुये तत्काल उन्मुक्त स्नेह से गुरु ने कहना प्रारम्भ किया—"वत्स ! तुम कुशल हो, जो कि मेरे मनमे चलने वाले चिता-चक्र को पहचानने मे समर्थ हुए। इङ्गिताकार सम्पन्न शिष्यो का विलक्षण लक्षण तुम्हारे मे है, इसमे कोई सशय नही। आधिपत्य को पद-विभाजनपूर्वक देखा जाये तो आधियो (मानसिक चिताओ) का स्वामित्व स्वीकार करता है यह अनुभवशालियो की प्रसिद्ध किंवदती सत्य है—यह स्पष्ट प्रतीत हो रहा है। प्रतिदिन नये-नये, जिनका कोई प्रतिकार नही है, ऐसे अच्छे और बुरे समाचार मेरे मस्तिष्क-मंदिर मे प्रवेश करते हैं। खेद है, संसार की विद्यमान जीवन-पद्धति वडी ही जटिलतम हो गई है। जैसे रुग्ण व्यक्तियो की भोजन के प्रति रुचि शिथिल हो जाती है, वैसे ही श्रद्धास्पदो मे भी भक्तो की श्रद्धा शिथिल हो गई है। सज्जन व्यक्तियो मे भी बुराई खोजने के लिये गीधो के समान दम्भियो की दृष्टि वडी जागरूक हो रही है। जिन्होने प्रकाश का सपर्क नही पाया है, उन अन्धो के समान असज्जनो की बुद्धि शुष्क तर्करूप मधुपर्क (यज्ञ) करने के लिये वडी विकसित हो रही है। तुच्छ व्यक्तियो के द्वारा तो छोटी-सी त्रुटि भी वेग-वाली नालो की तरह नही तैरी जा रही है। अन्तर मे खाली होते हुये भी

प्रवाहिकेव[1] तुच्छैस्तुच्छापि त्रुटिः। पटहवदन्तःशून्या अपि निर्घोष-पटव प्रायेण पञ्चजना। विचित्रम्! गुरूणा गौरवं गर्हाया विलिल्ये। स्वाभिमतमेव साधु नतरामाचार्य-सम्मतम्। भगवन्! किं भावि यत् साम्प्रतिकेऽपि काले जातेदृशी धर्मावहेला! इत्थं गुर्वी पृष्ठभूमिं निबध्नन्तो गुरवः सखेद मेदपाट-घटनाभेदं प्रकटितवन्त —"यथाऽद्यैव ममाभ्यर्णमागताना केषाञ्चन मेदपाटीय-श्रावकाणां मुखादाकर्णि मया यद्राजनगरीया गरीयासः श्रावका श्रावकाचारचतुरा अजनिषत सन्देह-सदन-बन्दयः। संशेरते विविध-साध्वाचारचर्चा विचारयन्त, शेरते च कर्कश-कुतर्क-शय्यायाम्। अपेक्षते हि गरिष्ठागमज्ञानमपि सिंहीपय इव पवित्राष्टापदपात्रम्। अपात्र-नियुक्तं विशदमपि कौलेयक-कुक्षिगत-क्षीरमिव[2] स्पष्ट कष्टप्रदम्। अहो! 'सुष्टु दत्त'[3]मिति ज्ञानातिचारेषु वरमाविष्कृतमत्यन्तानुभूतिभाजा भगवता। नहि वदान्याना दानमेव पुण्य-निदानं, यावत् सूक्ष्मेक्षिकया नहि परीक्ष्यते क्षेत्रम्।

हन्त! विलोलदविनयस्पन्दना वन्दनाऽपि परित्यक्ता पण्डितंमन्यैस्तै पारम्परिक-साधूना पुरत। विनयगुणविकसन्त सन्तस्त्वसद्भि साधमपि नहि व्यवहाररेखा रहयन्ति[4]। भव्यताया सभ्यतैव कारणमिति प्रत्यक्षमनुभूतम्। विद्या-विभववन्तोऽप्येतद्विरहिता अहिता इव प्रतिभान्त्यचक्षुष्याः। चरणचुम्बिनीरो हि वानीरो[5] निषेवितकूलङ्कषाकूलोऽपि विच्छिन्न-मूलो नहि भवति विनततया। द्वैधीभवनायैव न किमु शुष्कतामासेवते काष्ठम्? अल्पज्ञानामेव सहभावि लक्षणमवलेप। बहुज्ञातेऽपि बहुविज्ञातव्यमवशिनष्टि शिष्टानाम्। चञ्चच्चटकचञ्चुचोषित-[6] सप्ताष्ट-

१ लघु प्रवाह—प्रवाहिका [पानी का छोटा नाला, इति भाषा]
२ श्वान-कुक्षिगत०। ३ सुट्ठु-दिण्ण' [पात्र सेज्यादा दिया हो, इतिभाषा]।

पटह (ढोल) की तरह आजकल के लोग निर्घोष-पटु बने हुये है। बडा विस्मय है, गुरुओ का गौरव भी गर्हा मे विलीन हो चुका है। अपना अभिमत ही समुचित और सुन्दर समझा जा रहा है। आचार्य के अभिमत का कोई मोल नही। हे भगवन्! क्या गजब होने वाला है, वर्तमान काल मे धर्म की कितनी अवहेलना हो गई है।" इस प्रकार लम्बी पृष्ठभूमि बाँधते हुए गुरु ने मेदपाट की घटना का भेद खोला—"आज ही मैंने मेवाड से आये हुए कुछ श्रावको के मुख मे सुना है कि राजनगर के बहुत से श्रावक जो कि श्रावकाचार मे बडे निष्णात है, सदेह-सदन के बंदी हो गये हैं। साध्वाचार की विभिन्न बातो पर संशय-ग्रस्त हैं और कर्कश कुतर्क करते हैं। लगता है गरिष्ठ-आगम ज्ञान भी सिंहनी के दूध की तरह पवित्र स्वर्ण-पात्र की अपेक्षा करता है। अपात्र मे डाला विशद-ज्ञान भी कुत्ते के उदर मे गये दूध के समान स्पष्ट ही दुखदायक होता है। ज्ञानातिचार मे अत्यन्त अनुभूतिशाली भगवान् ने जो 'मृष्ठुदत्त' पात्र से अधिक दिया हो) कहा है, वह सही है। दानवीरो का दान पुण्य का निदान ही है, ऐसा तब तक नही जब तक वे सूक्ष्म बुद्धि से पात्र की पूर्ण परीक्षा नही करते है।

बडे खेद की बात है, उन पण्डितमन्य श्रावको ने परम्परा से चले आ रहे साधुओ को जिसमे विनयगर्भित है, उस वन्दना-व्यवहार का भी परित्याग कर दिया है। विनयगुण से विकासमान सन्तजन तो असज्जन पुरुषो के साथ भी व्यवहारिकता का परित्याग नही करते। भव्यता का लक्षण सभ्यता ही है, यह प्रत्यक्ष अनुभव किया है। विद्या-विभव से सम्पन्न भी जो विनयगुण से रहित होते है वे शत्रु के समान अप्रिय लगते है। चरणो के माध्यम से पानी खीचने वाली वेत नदी के तीर पर स्थित भी विनीतता के कारण कभी छिन्नमूल नही होती। काष्ठ की शुष्कता केवल टूटने के लिए होती है। अभिमान अल्पज्ञ व्यक्तियो का ही सहभावी लक्षण है। शिष्ट व्यक्तियो के तो बहुत जान लेने पर भी बहुत ज्ञातव्य शेष रह जाता है। चिडिया का बच्चा अपनी चोंच से सात-आठ बूँद पानी पी ले तो क्या समुद्र खाली हो सकता है? मनुष्य की बुद्धि की यह परम मन्दता है कि वह अन्तिम निर्णायक अपने आपको मानता है।"

---

४ त्यजन्ति, 'रहण् त्यागे' इत्यस्य धातोरूपम्। ५ 'वानीरो वेतसोऽपि च' इति हैम (बेंत)। ६ चूष पाने, चोषितम् पीतमित्यर्थः।

वारिबिन्दु किं नाम सिन्धु-शून्यतामाविर्भर्ति ? परममान्द्यमिदं मनुष्यस्य मनीषाया यदन्तिमनिर्णायकमात्मानमेवाङ्गीकुरुते ।

अस्तु, उत्तिष्ठन्तमेव गदं निर्वर्हितु[1]मिच्छन्ति शीघ्रमगदंकारा[2] । व्यतीतेऽनेहसि[3] सोऽपि बद्धमूलशाखीव दुरुच्छेद्य-संज्ञामङ्गीकुरुते । अतः किं करणीयमथ मयेति मुहुः परामृशति विचिकित्सितं[4] चेतः । कथंकारमयं व्याधिः प्रतीकारपद्यामुप-पद्यतेतमामिति चिन्त्यम् ।"

इत्थं गुरुहृदयगतां गुर्वी व्यथामनाकुलमाकलय्य तद्व्यपनेतुमनाः सुमना शिष्यसत्तमो व्यजिज्ञपत्—"भगवन् ! स्फुटमवसितं मया यया चिन्तया भवतामन्तःकरणमुद्विग्नम् । नूनमयं जीवनपाथःप्रवाहो निम्नोन्नत-गतिमासादयतितराम् । किमिह तद् वस्तु वस्तुत्वमञ्चति यन्न चञ्चति ध्रुवमुत्पाद-व्यय-ध्रुवदशाम् ! दृष्टमपि विनष्टं, विनष्टमपि च स्पष्टं चकास्ति । इयमेव ज्ञानिनां पराकाष्ठा यत् साम्यसूत्र-सूत्रिता विलसति सुखाऽसुखेषु दृष्टिः । सृष्टिः सर्वापि समानतामावहेदित्यारेकणीयम्", समता तु कस्यचित्प्रकटित-प्रकृष्टबोधस्य भवितुमर्हतीति मन्तुं शक्यम् । गुरो ! नायं कोऽपि चिन्ताया विषयः, सायं प्रातः समायान्त्येव जीवन-यात्राया मनोज्ञाऽमनोज्ञाः परिणामाः । कीदृक्षा प्रतिभाति कर्मठानां क्रिया या प्रक्रियया न स्यात् प्राप्त-प्रतिक्रिया ? सर्वमपि साफल्यमसाफल्यं संकल्पतल्पासीनमेव । सर्वदा शुभसंकल्पानां सर्वतः शुभमुज्जृम्भते । तेषां स्वप्नायितमपि प्रत्यक्षायते, तेषामनघाः प्रवृत्तयो जाजायन्ते कामदुघाः, तानुपतिष्ठन्ते साफल्यश्रेणयः स्वयम्वराः, तेषां यत्र पादन्यासस्तत्र सर्वासां श्रियां निवासः, तेषामारब्धं प्रत्यूहव्यूहैरपि नहि भवति स्तब्धम्, तेषां प्रयासो नहि प्रयास-

---

१ प्रशमयितुम् ।   २ अगदंकारा—वैद्याः ।   ३. काले-समये ।

'अस्तु, चिकित्सक लोग उत्पन्न होते ही रोग को प्रशान्त करना चाहते हैं; समय बीतने पर वह बद्धमूल वृक्ष की तरह दुश्छेद्य बन जाता है। इसलिये मुझे क्या करना चाहिये ? संदेहग्रस्त चित्त यह बार-बार परामर्श करता है। जिस प्रकार इस व्याधि का प्रतिकार हो, यह चिन्तनीय है।"

इस तरह गुरु के हृदय की महान् व्यथा को अनाकुलता से अवधारण कर उसे दूर करने के लिये स्वच्छ-हृदय सुशिष्य ने विज्ञापना की—

"भगवन् ! आपका चित्त जिस चिता से उद्विग्न है; मैंने उसे अच्छी तरह समझ लिया है। यह जीवन का प्रवाह निश्चित ही कभी निम्न और कभी उन्नत गति से चलता है। यहाँ वह कौन-सी वस्तु है जो नित्य ही उत्पाद-व्यय और ध्रुव दशा को प्राप्त नहीं होती। दृष्ट है, वह विनष्ट है और विनष्ट है, वह विद्यमान है।

ज्ञानियों की यही पराकाष्ठा है कि सुख-दुख में उनकी दृष्टि साम्य सूत्र से सूत्रित रहती है। सारी सृष्टि समान बन जाए यह असभव है, समता तो किसी प्रबुद्धचेता के हो सकती है, यह माना जा सकता है। गुरुवर ! यह कोई चिंता का विषय नहीं है। जीवन-यात्रा में सुखह-शाम, मनोज्ञ अमनोज्ञ परिणाम आते ही रहते है। कर्मठों की ऐसी कौन सी क्रिया है, जिसकी प्रक्रिया से प्रतिक्रिया न हो। सब सफलता-असफलता सकल्प के आधीन है। सदा शुभ-सकल्पा का सब जगह शुभ परिणमन होता है। उनके स्वप्न भी साक्षात् होते है। उनकी निष्पाप-प्रवृत्तियाँ उनके लिये कामधेनु सिद्ध होती है। सफलता की सन्ततियाँ उन्हे स्वय ही वरण करती है। उनका जहाँ पादन्यास होता है वहीं सब समृद्धिया का निवास होता है। उनका प्रारब्ध कार्य-विघ्नो के प्रचड आक्रमण से भी नहीं रुकता। उनका प्रयास कोरा प्रयास-मात्र होकर

---

४ विचिकित्सित—सशयितम्। ५ मगयितव्यम्।

मात्रभ्राजिष्णुर्विश्राम्यति, तेषां विरोधो नहि विधातुमीशस्तत्पथाऽवरोधम्। अलमलमनया चिन्तया, किमुचितमनुष्ठेयमिति विशिष्ट-दृष्ट्या दिष्ट्या स्पष्टनीयमाचार्यचरणैः।"

मनस्विनो भिक्षोर्हृदय-द्रढिमानमनुभूय विस्मयमाना स्मयमाना गुरव सावष्टम्भ व्याजह्रिरे—"वत्स! सत्यन्तेवासिनि त्वादृक्षे वीत-साध्वसे[1] स्वत एव जातजानमाचार्याणां चित्तं चिन्ताचक्रमुक्तम्। स किंधराधिपो[2] यस्य न दण्डनायको धृतमायक। तत् किं शरीरं यस्य न स्वकीया अप्यपघना[3] शासनमानिन। किं तेन बहुवरेणापि करेण यस्य न साङ्गुष्ठा कश्शाखा साम्मुख्यमाख्यान्ति! तदानीमेवैको बलीयान् यदा तदानुपदिका बहीयांस स्यु। प्रभुस्तदानीमेव प्रभुर्यदाऽनुचरा स्युरनुचरा[४]। अतोऽहं निर्णये, यत् कांश्चन समयज्ञान् साधून् तत्र प्रहिणोमि," अनुमिनोमि च ते तत्र गत्वा श्राद्धसन्देहान् समाधाय तान् सुस्थिरान् विधास्यन्ति, पाययिस्यन्ति च गुरूणां निर्भरं भक्तिरसम्"।

वृक्षावलीनां तदैव रक्षा संभविनी यदा वनमाली दक्षतया ऽवधत्ते। यतस्तत्कालमुपचेतव्या तडागपालिरितरथा लब्धपथं पाथ[६] स्वतलं स्थले परिणमयति। प्रादुर्भवन्नेव विपाङ्कुर समूलकाषं कषणीय, पश्चात्तु तदुद्धारो नैषत्कर[७]।

विमर्श-विशिष्टान् गुरुशब्दान् नेत्राभिनयै सह बाढमित्युररीकुर्वाणो भिक्षु पुन प्रष्टुमुत्सेहे—"स्वामिन्! तत्त्वतो नाराद्[८] वरिवर्त्ति विभूनां विचारधारा। भूरय सन्ति भवतां शिष्यास्तर्कभूरय, भवदादेशाद् येऽनुगृहीता भविष्यन्ति त एव तत्र प्रबोधदानकुशला साहृष्टिक[९] फलं लप्स्यन्ते। यान् यान् श्रीमतां शेमुषी[१०] तन्निमित्तं विशिनष्टि तांस्तान् समाहूय सुखमाज्ञापयन्तु।"

---

१ वीत-भये। २ किंक्षेपे—कुत्सितो धराधिप. ३ अवयवा।

विश्राम नही लेता। उनका विरोध करके कोई उनकी गति मे अवरोध नही डाल सकता। छोडिए इस व्यर्थ चिंता को। आप तो 'क्या समुचित अनुष्ठान किया जाये, यह विशिष्ट चिन्तनपूर्वक प्रसन्नता से निर्देशन दे।"

मनस्वी भिक्षु के हृदय की यह दृढता देख विस्मत होकर मुस्कराते हुए गुरु ने विश्वासपूर्वक कहा—"वत्स! तुम्हारे जैसे निर्भीक शिष्य के होते हुए आचार्यो का चित्त स्वत ही चिंता-चक्र से मुक्त हो जाता है। वह क्या राजा, जिसका सेनापति सदा शस्त्रो से सुसज्जित न रहे। वह क्या शरीर, जिसके अपने अवयव भी आज्ञा मे न हो? उस बहुत सुन्दर हाथ का भी क्या मूल्य, जिसके अगूठे सहित अगुलियाँ अधीन न हो। एक मनुष्य तभी वर्चस्वशाली माना जाता है जब उसका अनुगमन करने वाले अनेक व्यक्ति हो। स्वामी तभी स्वामी होता है जब उसके अनुचर वास्तव मे अनुचर (पृष्ठगामी) होते हैं। इसलिए मैं निर्णय करता हूँ कि किन्ही आगम-विशारद साधुओ को वहाँ भेजूँ और अनुमान करता हूँ कि वे वहाँ जाकर श्रावको के सदेहो को समाहित कर उन्हे सुस्थिर बनाएँगे और गुरु-भक्ति का पर्याप्त (निर्भर) रस पिलाएँगे।"

"वृक्ष-पक्तियो की तब ही रक्षा होती है, जब वनमाली दक्षता से सावधान रहे। तालाब की फूटी दीवार का तत्काल उपचार करना चाहिये, अन्यथा निकलता हुआ पानी अपने तल को स्थल रूप मे परिणत कर देता है। उत्पन्न होते ही विष-अकुर को जड से उखाड देना चाहिये, नही तो उसको विनष्ट करना मुश्किल हो जाता है।"

गुरु के विमर्श से सजे हुए विचारो को सुनकर आँखो के अभिनय के साथ स्वीकृत करते हुए शिष्य भिक्षु ने पुन निवेदन किया—"स्वामिन्! आपकी चिन्तनधारा उपयुक्त है। आपके पास बहुत से योग्य तार्किक शिष्य है। आपके आदेश से जो अनुगृहीत होगे वे ही वहाँ श्रावको को प्रबोध देकर तत्काल लाभान्वित होगे। आपकी दृष्टि मे जो-जो उस कार्य के योग्य हो, उन्हे आमत्रित कर आनन्द से आज्ञा दीजिए।"

---

४ अनुगामिन इत्यर्थ। ५ प्रेषयामि। ६ पानीयम्। ७ नेषत्कर—न सुकर। ८. न दूरम्। ९ तात्कालिक—फलम्। १० शेमुषी—दृष्टि।

श्रीभिक्षुणोपढौकितं कर्णामृतं निपीय प्राप्तसौहित्येन गुरुणा पुनरऽभाणि—"वत्स ! कं प्रेषयामि तत्रेति चिन्तया प्रत्येकं मुनीनामुपरि सूक्ष्मया दृशा व्यलोकि, परन्तु त्वा विरहय्य नहि कस्याप्युपरि मम मति स्थितिमनुबध्नाति । नहि किमासन् रामसेनायामसङ्ख्या सैनिकास्तथापि लङ्का-दौत्याय हनूमत्येव राममति रतिमाससाद । यतस्तस्यैव प्रेषण प्रेष्ठं श्रेष्ठं च यस्तत्रत्यं कृत्य सम्यङ् निर्वोढुमीश स्यात् । तत्र का परिस्थितिस्तत्सम्मुखीना स्यादिति नावसातुमत्र[1] शक्यते । अनवबुध्य परिस्थिति केवलं कथनवत्कारक प्रेष्य प्रायो मारक एव जायते । अत कतिभिश्चन साधुभि सार्धं त्वमेव तत्र गच्छ, स्वच्छप्रतिपदा[2] प्रत्यावलयस्व तान् स्व-संप्रदाय-निष्ठायाम् । यद्यपि विधेय-धुरन्धरं[3] त्वा दूरयितुं नहि मम मानस वष्टि, किन्तु नान्यैस्तत्कार्यं सुशकमिति मन्वानेन मया त्वमेव निर्वाचित । अतस्त्वमेव प्रस्थातुमाशु सज्जो भव, चातुर्मास्यमपि तत्रैव निर्गमयितुमुत्सहस्व, वहस्व सुख गुरु गुरुप्रदत्तं च कार्यम् ।"

इत्थं गुरुभि सावष्टम्भं स्वनाम निर्घुष्टं निशम्य शमिश्रेष्ठो भिक्षुर्विनतकन्धरं विज्ञपयामास—"प्रभो ! सन्त्यनेके भदन्ताना शासने प्राचीना अर्वाचीना मनीषिणो मुनयस्तथापि तत्र गन्तुं यदहमनुगृहीतस्तद् गुरुचरणाना गौरवम् । तत्कार्यं सम्यक् सम्पादयितुमनेके वाचयमा प्रभूष्णवस्तथापि भावत्की दृष्टिमामेव विशिनष्टि तन्ममोत्कृष्ट सौभाग्यम् ।"

इत्थं गुरु शिष्यौ परस्परमालपन्तौ सुखं संलीयेते स्म[4] ।

इति श्री चन्दनमुनि-विरचितेऽभिनिष्क्रमणाख्ये महाकाव्ये गद्यप्रबन्धे प्रथम समुच्छ्वास ॥

---

१ नावगन्तुम् । २ निर्मलबुद्ध्या । ३ विनयि—प्रमुखम् ।

श्री भिक्षु के द्वारा उपहृत वर्णामृत को पीकर सुतृप्त होकर गुरु ने कहा—"वत्स ! वहाँ किसे भेजू ? इस चिंतन से सब मुनियो के ऊपर अपनी सूक्ष्म-दृष्टि डाली है, परन्तु तुम्हारे अतिरिक्त मेरी बुद्धि किसी पर नही टिकती । राम की सेना मे क्या असख्य सैनिक नही थे ? फिर भी लका की दूतता के लिये राम को हनुमान ही विश्वस्त लगे । इसीलिए उसे ही भेजना उपयुक्त और श्रेष्ठ होगा, जो वहाँ के कार्य को सम्यक् प्रकार से निभा सके । वहाँ उसके सम्मुख क्या परिस्थिति पैदा हो जाए, यह यहाँ से नही जाना जा सकता । परिस्थिति को नही पहचानने वाला, केवल कथन मात्र को करने वाला व्यक्ति अक्सर बहुत अयोग्य साबित होता है । इसलिए कितनेक साधुओ क साथ तुम्ही जाओ यही अच्छा रहेगा । अपनी निर्मल बुद्धि के द्वारा उन श्रावको को समझाकर अपनी सम्प्रदाय मे निष्ठावान् बनाओ । यद्यपि तुम जैसे परम-विनीत को दूर करने को मेरा मन नही चाहता, पर दूसरो से वह कार्य सम्पन्न नही हो सकता यह मानते हुए ही मैंने तुम्हारा निर्वाचन किया है । इसलिए तुम ही प्रस्थान करने के लिए शीघ्र तैयार हो जाओ । चातुर्मास्य भी तुम्हे वही बिताना है, और गुरु द्वारा प्रदत्त इस महान् कार्य को सम्पन्न करना है ।"

इस प्रकार गुरु के द्वारा विश्वासपूर्वक अपना नाम उद्घोषित सुनकर मुनि-प्रवर भिक्षु ने नतमस्तक होकर निवेदन किया—"भगवन् ! आपके शासन मे अनेक प्राचीन, नवीन मनीषी मुनि है, फिर भी वहाँ जाने के लिये जो मेरे पर अनुग्रह किया है वह आपके चरण कमलो का ही गौरव है । उस कार्य को अच्छी तरह से सम्पादित करने के लिये अनेक साधु समर्थ हैं, तथापि आपकी दृष्टि मे 'मैं ही' उपयुक्त पात्र हूँ, यह मेरे लिये परम सौभाग्य की बात है ।"

इस प्रकार गुरु शिष्य ने परस्पर विचार विमर्श करते हुए सुखपूर्वक निद्रा की शरण ली ।

## प्रथम समुच्छ्वास समाप्त

---

५ शयाते स्म ।

## द्वितीयः समुच्छ्वासः | ★

स्वगर्भे मार्तण्ड-मण्डलमाबिभ्राणा परिपूर्णमासा योषावत् किञ्चित् पीतिमानमाप्ता प्राची । परित प्रसृमरे प्रकाशे को मा दोषाकरं[1] बहुमन्येति चिन्तयेव चन्द्रो निस्तेजस्तां जगाम । हतप्रभे प्रभौ किमस्माभि करणीयमितीव स्वसत्तां तिरोदधत्यो जगता दृष्टिपथोऽपसृता अपारास्तारा । जनाना सकाशादलब्ध-स्नेहा बालतपस्विन इवाऽग्निमासेवमाना अप्यहो ! निर्वाणमापन्ना तम —प्रतीपा दीपा । पुन पुन कोकूयमानै कुक्कुटैरदायि ब्राह्म-मुहूर्त्तस्य सूचना । सद्य स्वपत्युर्दर्शनोत्सुकाऽभवद् रोमाञ्च-कञ्चुकिता चक्रवाकी । प्रलम्बित-सस्तारा निद्राधारा अजनिषत पर्यटनखिन्ना प्राहरिकाः । पूर्वा सन्ध्यामुपासमाना वन्दनाध्यान-तल्लीना विरेजे महर्षीणा राजि । शयितान् प्रबोधयन्त्य इव नदितु लग्ना निर्घोषनिपुणा प्रासादाना घण्टा । चक्रभ्रम भ्रमितु प्रवृत्ता आलस्य-पेपण्य पेपण्य[2]-श्वश्रू-वधूनामेकीभूतै करै प्रतिगृहम् । प्रकटित-नवनीतपोषो दधिमन्थनघोष शुश्रू-यते स्म समन्तत । कुम्भद्वयशोभितमूर्धानः कूपमुपकण्ठयामासुर्वा-रिहारिण्योऽ[3]पीत स्तत ।

उपनत स्वर्ण-सन्निभोऽयमवसर इतीव प्रचकटयिषु स्वर्णभो-ऽहर्मणि स्तत्कालमुदयाचलमलञ्चकार । विष्वग् विसारिभिर्वसुभि[4]

---

१ दोषाकरम्—चन्द्रम् । पक्षे दोषाणाम् आकर त दोषाकरम् ।

## ★ | दूसरा समुच्छ्वास

अपने गर्भ मे मार्तण्ड-मण्डल को धारण करती हुई पूर्णमास वाली स्त्री के समान प्राची दिशि ने किंचित् पीतिमा धारण करली है। 'सब ओर प्रकाश फैल जाएगा तब मुझ दोषाकर-दोषों के आकर को कौन बहुमान देगा' मानो इस चिंता से चन्द्रमा निस्तेज बन गया है। हमारा स्वामी ही जब प्रभाहीन हो गया है तो हमसे क्या होना है, मानो इसी चिंतन मे अपने अस्तित्व को छुपाते हुए असख्य तारे ससार की दृष्टि से विलुप्त हो गये हैं। बाल-तपस्वियो की तरह अग्नि का सेवन करते हुए भी मनुष्यो से स्नेह (तेल) न पाकर तम को पीने वाले दीपक बुझ गये है। बार-बार उच्च स्वर से बोलते हुए मुर्गों ने ब्रह्ममुहूर्त की सूचना दे दी है। 'अभी पति के दर्शन होंगे' इस उत्सुकता से चकवी रोमाञ्चित हो उठी है। रात भर पहरा देने वाले पर्यटन से चूर-चूर होकर अपने शयन-वस्त्र बिछाकर निद्राधीन हो गये। पूर्व सध्या की उपासना करते हुए योगीजन वन्दना, ध्यान आदि मे तल्लीन हो गए हैं। सोये हुओ को जगाने के लिये ही मानो मंदिरो की निर्घोष-पटु घटाएँ बजने लगा है। प्रत्येक घर मे आलस को एकदम उडा देने वाली चक्कियाँ सास-बहू के सम्मिलित करो से चक्र की तरह चलने लगी है। जिसमे नवनीत उभर आया है, ऐसा दही-मन्थन का घोष चारो ओर सुनाई पड रहा है। दो घडो को सिर पर रखकर पनिहारिने भी कुएँ के निकट चारो तरफ पहुँच गई है।

यह बहुत स्वर्णिम अवसर मिला है, मानो इसी को प्रकट करने के इच्छुक स्वर्णप्रभ दिनपति ने उदयाचल को अलकृत किया। सब ओर प्रसार पाने

---

२ 'चक्कियाँ, इतिभाषा'। ३ 'पनिहारियाँ, इतिभाषा'। ४. किरणें।

प्रवासित नैश तमो नागित-सत्ताकमिवाऽभवत् । जातानि कमलाकरेषु कमलानामुन्मिषितानि मुखानि । सुख सम्पन्ना कुशेशय[1]-कोशेभ्या मकरन्द-तुन्दिलाना मधुकराणा मुक्ति । निद्रामुद्रित-लोचनानलसानह दर्शन ददामीतीव निसर्गादरुणोऽपि कृतकरुणोऽरुण शनै शनैरूर्ध्वगमनमारेभे ।

इतो भिक्षुरपि विजिहीर्षया गुरुसमीपमुपाजगाम । चतुरैश्च-तुर्भिर्मुनिभि सत्रा गुरोरन्त्या शिक्षा कुसुमीकृत्य सेनानीरिव मरुधर-[2] प्रदेशान्मेदपाटाय[3] सहज-शान्तया गत्या प्रतस्थे । प्रचण्ड-ग्रीष्मर्तौ प्रस्थितानामेषामुष्णिमा सहिष्णुता परीक्षितुमिव तीक्ष्णमा-चक्राम । कृशानुमनुकुर्वाणा विगतविटपिच्छाया सकटा सरणिर्मन्ये ऽनुपानत्कानेतान् व्यथितुमुत्का बभूव । उभयतो बबूलकण्टक-वृतिर्धूल्यामीपत्स्वकण्टकान् पिधायैतेषा चारित्र-चूडामणीना चरणान् स्प्रष्टुकामेव स्वानुरूपं स्वागतमुद्भावयामास । कीलकवदन्त-प्रविष्टान् कण्टकान् नि सारयतामेषामङ्घ्रितलतो झगिति नि·सृता कण्टकै सह रक्त-धारा मन्ये विरक्ताना विरक्तिरक्तिमान व्यनक्ति स्म । समस्त - वस्तुजातमत्युष्णता नयन्ती ग्रैष्मकालिक - मरुल्लहरी प्रतिष्ठासूना[4]मेतेषामन्त शीतलतां निरीक्षितुमुपक्रमते स्म । क्वचन निर्भर - धूलिधवलितपरिसरा प्रलम्बायमाना निर्गतनीरा नद्यस्त्यक्त-पदत्राणैरेभि कथमुल्लङ्घनीया इतीव पथि विषमा समस्यामुपढौ-कन्तेस्म । क्षीरमिव दुर्लभ नीर पौन·पुन्येन पीतमपि लोभाकुलाना-मिव नहि तृष्णा व्यपनेतुमलम् । अहो ! कूपानामतिगभीरिमानमाप्तेषु तोयेष्वपि रोमकूपेभ्यो निस्सरत्युपरित प्रस्वेदजलम् । अल्पान्तर सूचितमपि प्रलम्बीभूत प्रान्तरं[5] यथाकथाचमुल्लङ्घनीयं श्रान्त - पान्थानाम् । खेदापनोदाय विच्छायवदनैरध्वन्यैरध्वनि मृगयमाणा छायापि घुणाक्षरीयन्यायात् क्वचिदेव सुप्रापा ।

१ कमलकोशेभ्य । २ मारवाड से, इतिभाषा' । ३ 'मेवाड के लिये,

वाली किरणो के द्वारा प्रवासित निशा का अंधकार अस्तित्व-शून्य-सा बन गया। सरोवरों मे कमलो के मुख विकस्वर हो गये। कमल-कोशों मे बद्ध, मकरन्दपान मे मुग्ध मधुकरो की अनायास मुक्ति हो गई। 'नींद से मुंदी आखो वाले आलसो को मै दर्शन दू', मानो यह सोचकर स्वभाव से अरुण (लाल) होते हुए भी सकरुण बनकर अरुण (सूर्य) ने धीरे-धीरे ऊँचा उठना शुरू किया।

इधर सुयोग्य शिष्य भिक्षु भी विहार करने की इच्छा से गुरु के निकट उपस्थित हुए। चतुर चार मुनियो के साथ गुरु की अन्तिम शिक्षा धारण कर सेनापति की तरह मरुधर प्रदेश से मेदपाट (मेवाड) के लिये सहज शांत गति से प्रयाण किया। प्रचण्ड ग्रीष्म ऋतु मे प्रस्थान करने वालो की भयकर गर्मी ने, मानो उनकी सहनशीलता की परीक्षा लेने के लिए, तीक्ष्ण आक्रमण कर दिया। आग का अनुसरण करने वाली वृक्षो की छाया से रहित सकडी सरणि (सेरिया) मानो इन पादुकाहीनो को व्यथित करने के लिये उत्सुक हो गई। उसके दोनो तरफ बबूल के काटो की बाड थी। धूल मे थोडे अपने कांटों को छुपाकर चारित्र-चूडामणि के चरणो का स्पर्श करने की इच्छुक मानों अपने स्वभाव के अनुकूल स्वागत किया हो। कीलो की तरह अन्त.-प्रविष्ट कटको को निकालते हुए इनके पादतल से निकली हुई रक्त की धारा मानो इन विरक्तो की विराग की रक्तिमा कितनी है, इसे अभिव्यक्त कर रही थी। प्रत्येक वस्तु को गर्म बनाती हुई ग्रीष्म-काल की लू इन प्रस्थान करने वालो की मानो आन्तरिक शीतलता का परीक्षण कर रही थी। कही पर धवल-धूल से भरी हुई लम्बे पाट वाली शुष्क नदियाँ 'ये नगे पैर वाले हमे कैसे लाँघते हैं, मानो इसी भावना से पथ मे विषम समस्या खडी कर देती थी। दूध की तरह दुर्लभ पानी बार-बार पीने पर भी लोभियो की तृष्णा के समान प्यास बुझाने को समर्थ नही था। बडा विस्मय है कुओ का पानी बहुत गहरा होने पर भी रोम कूपो से ऊपर से प्रस्वेद जल निकल रहा था। थोडी दूर पर बताया हुआ भी मार्ग बहुत दीर्घ निकल जाता और श्रान्त पथिको को उसे जैसे-तसे लाँघना पडता था। पथ-श्रम से कान्ति-विहीन पथिको के द्वारा थकान को दूर करने के लिये छाया खोजने पर भी घुणाक्षर-न्याय की तरह कही पर ही मिलती थी।

---

इतिभाषा'। ४. प्रस्थानमिच्छूनाम्। ५. प्रान्तर–दूरशून्योऽध्वा इति हैमः।

किमेभिरानुषङ्गिकैः परीषहैः कार्यपरायणानामितीव मन्वानो भिक्षुर्निष्कम्पहृदयं सह सहगामिभिः पथि पुरस्सरतां सिषेवे। मध्येमार्गमुपेयुषामुपवसथानां[1] श्रद्धालवोऽनायासमागतानां मुनीनां दर्शनान्मुदिराणां मयूरा इव भृशं मुमुदिरे। अत्रैव विधातव्या प्रावृषेण्या[2] वसतिरित्यनुनयत्स्वपि तेषु गुरुशासनमेव पुरस्सरयन् पुरतः ससार सः। प्रतिग्रामं दायं दायं धर्मोपदेशं स्पर्शं स्पर्शं पुलिनप्रदेशं[3] सुखमर्बुदाऽद्रिमूलमाससाद।[4]

धैर्यशौर्यादिसद्गुणैर्यत्रत्यानां जेगीयमाना गुणगाथास्तेभ्यः प्रकृतिरपि प्रोन्नतपदमदादितीव मेदपाटदेशः शिखरिशिरःस्थानमधितस्थौ। भविष्यन्त्यत्र यवनानामनवरतमाक्रमणानीति चिन्तयेव विष्वग् विस्तृतैर्बहुप्राचीरैरनिर्दुर्गमैरद्रिदुर्गैर्यं प्रकृतिः परिवेष्टयामास। गुणस्थानश्रेणिमारुरुक्षुभिक्षुरिव भिक्षुरपरभिक्षुभिः सह सानुमच्छ्रेणिमारोढुमुपचक्रमे। प्रलम्बायमाने शुष्कप्राये वाहे[5] किञ्चिदार्द्रायां पद्धतौ पदानुपदमभिसरन्ती व्रतिनामियं ततिश्चण्डांशुताप - तप्ताऽपीपत्सहज - शीतलतामन्वभवत्। अतिभीष्मोऽपि ग्रीष्मर्त्तुः पार्वतीय - पवनसम्पृक्तः सत्सङ्गरक्त पापीव किञ्चिच्छ्लथपथमादिद्रिये। तत्र जङ्गम्यमानानां क्वचिदुत्पाद - व्यय - ध्रौव्यात्मिकां विभु - त्रिपदीमनुस्मारयन्तीव पलाशानां पत्त्रत्रयी मर्मरखैरमीषां श्रोत्रोत्सवमातेने। क्वचिद् धव-खदिर-पलाशमध्येकत्र तिष्ठद् व्याकरणोदितं द्वन्द्वैकत्वं साक्षादमून् दर्शयामास। क्वचित् श्वास - कफघ्नं वन्याऽऽटरूषपर्वतं नास्माकमत्र कोऽप्युपयुक्तेति व्याकुर्वदिव विमनायितमेभिर्विलोकितम्। क्वचिज्जटाजालजटिलो वटः स्वं कृष्णावासमादिशन्निवैतान् विश्रान्त्यै प्रोत्साहयाञ्चक्रे। क्वचिदारण्य - कर्णिकारक्षुपाणाममीषुरभितो कुसुमावलिर्मूर्द्धानां श्रेणिरिव मौनावलम्बिनी दूरादेव शोभमाना प्रफुल्लमेतान्

---

१ ग्रामाणाम्। २ चातुर्मासिकी। ३ "काण्ठा प्रदेश" इति भाषायाम्। ४. "अरावली की पहाड़ियाँ" इति भाषा। ५. वाहे—वाहेला, इति भाषा।

कार्य-निष्ठा के लिये ये सब विघ्न बाधाएँ कुछ नहीं, यही मानते हुए निष्कम्प हृदय से भिक्षु अपने सहगामियों के साथ मार्ग में आगे बढ़ रहे थे। मार्गवर्ती ग्रामों के श्रद्धालु श्रावक अनायास आये मुनियों के दर्शन पाकर मेघागमन से मयूरों की तरह हर्ष से नाच उठे। "आप चातुर्मासिक प्रवास यहीं करें" यह अनुनय बहुत करने पर भी उन्होंने गुरु की आज्ञा को ही आगे रखा और बढ़ते गये। मार्गवर्ती प्रत्येक ग्राम की जनता को धर्मोपदेश देते हुए और कांठा-प्रदेश का स्पर्श करते हुए वे अरावली पर्वत की तलहटी में पहुंच गये।

धैर्य, शौर्य आदि सद्गुणों के आधार पर जहाँ के लोगों की, गुण-गाथा गाई जाती है, उन्हें प्रकृति ने भी उन्नत स्थान दिया है, मानो इसी बात की साक्षी-रूप सारा मेदपाट (मेवाड़) पर्वत चोटियों पर बसा है। यवनों के अनवरत आक्रमण होते रहेंगे, मानो इसी चिन्ता से सब ओर फैले बहुत प्राचीर वाले अति दुर्गम पर्वत-किलों में प्रकृति ने जिसे परिवेष्टित कर रखा है। गुणस्थान, श्रेणी आरोहण के इच्छुक मुनि की तरह भिक्षु ने अपने सहयोगी साधुओं के साथ शैल-श्रेणि पर चढ़ना प्रारंभ किया। बहुत प्रलम्ब शुष्कप्राय प्रवाह की कहीं-कहीं थोड़ी गीली पगडंडी पर चलती हुई इस साधुओं की पंक्ति ने सूर्य के प्रचण्ड ताप से तप्त होने पर भी थोड़ी सहज शीतलता अनुभव की। अति भीष्म ग्रीष्म ऋतु भी पार्वतीय पवन के संपर्क में आकर सत्संगरत पापी की तरह तनिक शांति के मार्ग को प्राप्त कर चुका था। कहीं पर, उत्पाद, व्यय, ध्रौव्यात्मक त्रिपदी बड़ी व्यापक है, इसका स्मरण कराती हुई मानो पलाश वृक्षों की पत्रत्रयी अपने मर्मर शब्दों के द्वारा इनके कानों को आनन्द-निमग्न कर रही थी। कहीं पर, धव, खदिर और पलाश एक जगह में खड़े हुए व्याकरण में कथित 'द्वन्द्वैकत्वम्' समास का मूर्त-रूप दिखा रहे थे। कहीं पर इन्होंने दमा और कफ को नष्ट करने वाले अड़ूपे[6] के वन को यहाँ पर मेरा कोई उपयोग करने वाला नहीं है, मानो इस बात को प्रकट करते हुए, उसे श्री विहीन देखा। कहीं पर जटा-जाल में जटिल वट-वृक्ष, मेरी छाया में तो श्री कृष्ण ने विश्राम लिया है, मानो इस बात को निर्दशित करता हुआ उसने भिक्षुक पथिकों को विश्रान्ति के लिए प्रोत्साहित किया। कहीं पर जंगली कणेर[7] के वृक्षों की सौरभहीन कुसुमावलि ने मौनावलम्बिनी मूर्खों की श्रेणी की तरह इन सबको दूर से देखा। कहीं पर

६. जंगली अड़ूपा, इतिभाषा। ७. जंगली कणेर, इतिभाषा।

प्रेक्षाञ्चक्रे। क्वचन फलप्राग्भारनम्रा कम्रा आम्रवृक्षास्तपोधनानमून् प्रणिपिपतिषव[1] इव शुशुभिरे। कुहचन मादकफलजनयिता मधुद्रुमो मद्यनिषेधिनोऽमी इति भीतिमाभेजानो निज नाट्यनाटकं निदर्शयामास।

एवमुभयत सानुमना मध्यगमध्वानमाव्रजन्तोऽमी परमरमणीयामुपत्यकामतिक्रम्य विशेषमूर्ध्व ब्रह्मद्वारमुपेतुकामा योगिन इवाधित्यका चटितुमुच्चेलु। अवरोह इवाऽऽरोहो न सुखसाधीयानित्यनुभवन् भूघनस्तेषा[2] भृशं कृच्छ्रायते स्म। शनकैरुपर्युपरि व्रज्या विदधाना यद्यपि मन्दायिता पादाना गतिस्तथापि हृद्रोगिणामिव निरामयानामप्येषा श्वासोच्छ्वासगतिर्वेगवती बभूव। कायिक-विनयभेदेषु सआउत्त गमणमिति" प्रभुणा प्रतिपादित मन्येऽत्रैवाऽमीषा स्थपुट-"कटाया[3] पद्धतावटाट्यमानाना याथातथ्येन परिणतम्। एकोऽपि पदस्तत्रानुपयुक्तपदे निक्षिप्तो दारुणा विपदमाकारयतीति निर्विवादमभ्युपगच्छन्तीर्यासमितिश्चक्षुष्मती[4] विललास तेषाम्। दृष्टानुमेयाऽत्यन्तगभीरिम-भैरवा दर्शनमात्र-कम्पितहृदयापि तत्रत्या गर्त्ता नाऽमीषामनुभवजुषा गतिमवरुरोध। क्वचित्कर्पूरनिकरधवलधाराभिरनवरतपातुक स्रोत समीरेण सह शीकरव्यपदेशतः सत्कारयदमून् स्वोपकण्ठमुपस्थातुमनुरुरोध। विश्ववत्सलोऽयमुत्स. प्रतिक्षणं निर्मलममृतायमान जल दददपि नहि केभ्योऽपि प्रतिदानमाकाङ्क्षति, किमु न शिक्षणीयमिदमनागसिवशजैरस्माभिरितीवाऽनल्पं कल्पयामास तेषामुन्मिषितं मानसम्। न जागृयाद् यदि क्षुत्-पिपासादि-पीडा को नाम प्रकृति-क्रीडास्थल परममभिराममिद पदमवगणय्य कोलाहलाकुलं व्याकुल यन्त्रवद् व्यस्तकार्यभर वृहन्नगरमधिवस्तुमुत्सहेत, सहेत वा ,विविध-वीवध"-

---

१. प्रणन्तुमिच्छव। २ शरीरम्। ३ विषमोन्नत–सकीर्णायाम्, 'ऊची-नीची और सकडी, इति भाषा'। ४ ईर्यासमिति–जैन पारिभाषिक

फलो के भार से नम्र कमनीय आम्र-वृक्ष इन तपस्वियों के प्रणिपात मे मानो झुक हुए शोभित हो रहे थे। कही पर मादक फलो को उत्पन्न करने वाला महुआ 'ये मद्य का निषेध करने वाले है' इस भय से भीत, पत्र, पुष्पो से रहित अपना नग्न नाटक दिखा रहा था।

दोनो तरफ की पर्वत-श्रेणियों के बीच मार्ग से चलते हुए ये परम-रमणीय उपत्यका (तलहटी) को लाँघकर अधिक ऊँचे ब्रह्मद्वार को पाने के इच्छुक योगियो की तरह अधित्यका (पर्वत की ऊपरी भूमि) पर चढने के लिए आगे बढे। अवरोहण की तरह आरोहण सुख-साध्य (सरल) नही है, यह अनुभव करते हुए इनका शरीर खूब थकान की अनुभूति करने लगा। धीरे-धीरे ऊपर चढने मे यद्यपि इनके पैरो की गति मंद हुई, फिर भी हृदय रोगियो की तरह इन नीरोगियों के भी श्वासोच्छ्वास की गति वेगवती हो गई। ऊँचे-नीचे और सकडे मार्ग मे चलते हुए इनके कायिक विनय के भेदो मे जो "आउत्त गमणं" भगवान् ने बताया मानो यहाँ वह इनके यथार्थ मे परिणत हो गया। एक भी कदम यदि अनुपयुक्त स्थान पर रख दिया है, तो निर्विवाद भीषण संकट का सामना करना पडेगा, इसे स्वीकार करती हुई उनकी ईर्या-समिति बडी जागरूक बनी। देखने पर ही अनुमान हो, अत्यन्त गहरे, भयानक और जिनके दर्शन-मात्र से हृदय थरा उठे—ऐसे वहाँ के खोह भी उन अनुभव-शालियो की गति को अवरुद्ध नही कर सके। कही पर कपूर-समूह के समान धवल धारा मे निरन्तर गिरता हुआ झरना पवन के साथ शीकर के बहाने सत्कार करता हुआ उन्हें अपने पास बैठने का अनुरोध कर रहा था। विश्व-वत्सल बृहद् स्रोत प्रतिक्षण अमृत के समान निर्मल जल देता हुआ भी किसी से प्रतिदान की आकाक्षा नही करता।' 'क्या निष्काम वश वालो को हमे यह नही सीखना चाहिए?' इस पर उनका प्रबुद्ध-मानस अनेक कल्पनाएँ करता रहा। यदि भूख-प्यास की पीडा न सताये तो ऐसा कौन हो जो प्रकृति के क्रीडा स्थल, इस परम सुन्दर स्थान को छोड़कर कोलाहल से परिपूर्ण, व्यग्रता से युक्त, यन्त्र की तरह व्यस्त कार्यक्रम वाले बड़े नगर मे जाकर बसना चाहे और कौन विविध भारवाली जीवन निर्वाह की यत्रणा को सहे,

---

शब्द जो गमनागमन की सावधानता बतलाता है। ५ भारे विवध-वीवधौ-इति हैम।

स्वरूपां जीवन-निर्वाह-यन्त्रणामित्थं मन्त्रयामास तेषामन्तःकरणम्।
अहह! खलु सत्यमिदम्, यत् पुरातनैर्मुनिपुङ्गवैर्दुष्करतपः
शुष्ककाययष्टिभिर्यावत्[1] कथितमनशनमाश्रयद्भिः पार्वतीयगह्वरमेव
विविक्तपदमन्वेषितम्। कदाऽस्माकमप्यवरुद्धाश्रवप्रवाहमीदृक् पुण्याहं
समेष्यति, यस्मिन् वयमपि लययोगमुपयुञ्जाना भुञ्जानाः सहजा-
नन्द-कन्दं निस्पन्दं विजनमुपासिष्यामहे। इत्थं शुभसंकल्पमय-
मन्तर्जल्पमारचयन्तस्तेसन्तः पुनरूर्ध्वंगमनाय प्रयेतिरे।

क्वचिच्छैलेषु नयनपथमवतीर्णा विशाला शिलाः स्वनामधन्यै-
र्धन्यर्षि-प्रभृतिभिः कृतपादपोपगमनैः[2] पवित्रितं पृथ्वीशिलापट्टकं
स्मारयामासुः। क्वचिदचला दन्तकाना[3] मिषतः स्वग्रीवां
बहिर्निगमयन्तो "भवद्भिरप्यदग्नि-परीक्षायामचलधैर्यवद्भिर्भाव्य"-
मितीव संकेतयामासुः। क्वचिद् दृषदां विशाल-खण्डा गण्डा[4]
एकैकशः पतिता स्वपतित्वमाविश्चिकीर्षव इवैतेषां पुरः प्रशस्तमे-
कत्वतत्त्वमुद्बोधयामासुः। क्षमाभृत एव प्रकर्षामुन्नतिमाप्स्यन्तीति
महीयसी शिक्षा क्षमाभृतां सकाशाद् मुदाऽऽद्रियमाणा इवैते
तच्छिखरमारुरुहुः। एवमेते प्राकृतरस-पानतः कवय इव पेप्रीयमाणाः
भिक्षवः पोस्फुरद्-नैसर्गिक-निवेशं मेदपाटदेशं प्रविविशुः।

विविधधन-धान्यादिवस्तुसवित्री विलोकिताऽमीभिर्मनोहारिणी
मेदपाटीया पार्वती धरित्री। आनाभि परिवेष्टितोपलप्राकारा
नयनाऽयनमागताहरितभरिता लघुलघुकेदाराः।[6] क्षीरसौदर्यं
मधुरनीरं दधाना ददज्जीवन-दाना शुण्डाकारा उदपाना[7] क्षेत्र-
शोभां वर्धयमाना निशमिताः। तन्निर्गता निर्मलजलधारिणी
वप्रान्तःचारिणी शस्यतृषामसहमाना इव सत्वरं वहमाना

---

१ यावज्जीवमनशनम्। २ पादपोपगमननामकं, अनशनं कृतं यैः।
३. दन्तकास्तु बहिस्तिर्यक्प्रदेशा निर्गता गिरेः इति हैमः ४ गण्डाः शैलोपलाः

यो उनका अन्तःकरण मन्त्रणा कर रहा था। अहा! यह बहुत ठीक है कि पुराने मुनिवर्गों ने दुष्कर तपस्या के द्वारा अपने शरीर को सुखाकर यावकिंचित (यावज्जीवन का) अनशन के लिये पर्वत की गुफाओं के एकान्त स्थान को चुना। हमारे भी कब ऐसा पुण्य दिवस आयेगा जब हम लययोग में लगे सहजानंद को भोगते हुए निस्पन्द एकांत की उपासना करेंगे।" यो शुभ संकल्पमय अन्तर्जल्प करते हुए वे साधु-जन और ऊँचे चढ़ने के लिए प्रवृत्त हुए।

मार्ग में उन्हें कहीं पर विशाल शिलाएँ मिलीं, जिन्होंने स्वनामधन्य धन्यऋषि-आदिमियों के द्वारा पादपोपगमन अनशन में पवित्रित पृथ्वी शिलापट्टक की स्मृति करादी। कहीं पर अचल पर्वत दांतों के बहाने मानो अपनी ग्रीवा बाहर निकाल कर "आपको भविष्य की अग्नि-परीक्षा में अविचल धैर्यवान रहना है" इसका संकेत कर रहे थे। कहीं पर चट्टानों के बड़े-बड़े पत्थर एक-एक गिरे हुए अपनी पतित-अवस्था को प्रकट करते हुए मानो इनके समक्ष, एकत्व ही प्रशस्त तत्व है इसका उद्घोष कर रहे थे। क्षमाशील ही प्रकृष्ट उन्नति को पायेंगे, क्षमाधारी के पास से यह महान् शिक्षा ग्रहण कर मानो इन्होंने पर्वत-शिखर पर आरोहण किया। ऐसे ये साधुजन प्रकृति के रसपान में कवियों की तरह प्रीणित होते हुए, जिसकी प्राकृतिक छटा निखर रही है, ऐसे मेदपाट देश में प्रविष्ट हुए।

इन्होंने विविध धन, धान्य आदि को उत्पन्न करने वाली मेदपाट की मनोहर पर्वतमयी भूमि को देखा। नाभि तक उपल प्राकारों से परिवेष्टित हरे-भरे छोटे-छोटे खेत देखे। क्षीर के सदृश मधुर जल को धारण करने वाले और जीवन दान देने वाले शुण्डाकार (सूंडिया) खेत की शोभा को बढ़ाने वाले कूएँ देखे। उनसे निकलने वाली, निर्मल जलमय खेत के अन्त तक जाने वाली शस्य की प्यास को न सह सकने के कारण मानो शीघ्र बहने

---

च्युता -इति हैम। ५ क्षमाधारका, पक्षे क्षमामृत पर्वता। ६ क्षेत्रे तु वप्र केदारौ, इति हैम। ७ उदपाना कूपा।

क्वचिदमीभि सारणि[1] दृष्टा। क्वचिन्माधुर्य-जन्यये सांवत्सरिक-तपश्चर्यामारचयन्तीव किञ्चिदुद्गता घनेक्षूणां वाटिका भिक्षूणां दृष्टिगोचरमापन्ना। क्वचिद् वृष्टिं प्रतीक्षमाणा कार्षिका वप्रान् शम्बाकुर्वाणा[2] निध्याता।

स्वातन्त्र्य-संग्रामेभ्यो भूयो भूयो युध्यमानो बुध्यमान प्राण-रक्षातोऽपि विशिष्टां धर्मरक्षाम्, सहमानोऽपि धनजनादीना-मसह्यां हानिं, वहमानोऽतिप्राचीनशुचिपरम्पराम्; यो देशोऽपि भारतीय-नरेशैर्विशिष्टया दृष्ट्या विलोकितस्तज्जानपदीया जना प्रायेण कृषिप्रधाना, स्वहस्तविन्यस्त-समस्तकार्यकलापा। तेषां स्वल्पाऽऽगमव्ययेन संतुष्टा पुष्टा वृत्ति। विहिताऽऽडम्बरवारणा साधारणा स्थिति। एकमग्रत कृत्वा तदनुगमन-कुशला वीतशङ्का मति। स्वल्पप्रचारो विद्यायास्तथाप्यनवद्याऽऽचार-सहिता। प्रतिग्राममग्रा[3] जैनी वसति। आगमरहस्यमन्वेष्टार[4] साध्वाचारं वेदितार श्रावका। लसद्धार्मिकानुरक्तिर्येषामकृत्रिमा भक्ति। नितान्तमदोलायिता तर्काभिघातै प्रतिकूलवातैरपि श्राद्धानां श्रद्धा। कृतमितव्ययरतिरपि यदीया दानार्थमकृपणा मति। चिरस्मृतिनेयं यत्रत्यमातिथेयम्। यवनैरनामितोत्तमाङ्गानां सूर्यवंशशिरोमणीनां महाराजप्रतापप्रभृति-वीराग्रणीनामुज्ज्वलं गौरवं येषां हृदि। निरञ्जन-पातिव्रत्यपद्धतीनां पद्मिनी-प्रमुख-महासतीनां पवित्रैश्चरित्रैर्धृताऽखर्वगर्वा यद्देशीया योषित। सर्वमपि भव्यं भव्यमनुभवन्तो ग्रामानुग्रामं विहरन्त एते तपोधना परमां मुदमातेनिरे।

इति श्री चन्दनमुनि-विरचितेऽभिनिष्क्रमणाख्ये महाकाव्ये 'गद्यप्रबन्धे' द्वितीयः समुच्छ्वासः

---

१ कुल्या—'पाणी का धोरा' इति भाषायाम्। २ अनुलोमं कृष्टं क्षेत्रं

वाली पानी की सारणि देखी। कही पर माधुर्य की प्राप्ति के लिए मात्सरिक तपश्चर्या करती-सी थोडी उगी हुई ईक्षु की सघन-वाटिका देखी। कही पर वृष्टि की प्रतीक्षा करते हुए और खेतो को जोतते हुए किसानो को देखा।

स्वतन्त्रता की रक्षा के लिए जिसने बार-बार युद्ध किया है, प्राणरक्षा से भी अधिक जिसने धर्म रक्षा को विशिष्ट माना है। अपनी शुद्ध प्राचीन-परम्परा का निर्वाह करते हुए जिसने धन, जन आदि की असह्य हानि को सहन किया है, और जो देश भारतीय सब नरेशो के द्वारा विशिष्ट दृष्टियो से देखा गया है, उस देश के निवासी जन प्राय. कृषि प्रधान, अपने हाथो से समस्त कार्य करने वाले हैं। उनका आय-व्यय बहुत सीमित है, अत. वे सन्तुष्ट वृत्ति वाले हैं। प्रदर्शन और आडम्बर रहित उनकी साधारण स्थिति है। एक को आगे कर उसका अनुगमन करना उनकी निःशंक धारणा है। यद्यपि विद्या का प्रचार अल्प है, फिर भी वहाँ के लोग उच्च आचार वाले हैं। प्रतिग्राम मे जैन बस्ती की प्रधानता है। आगमो के रहस्य को पहचानने वाले और साध्वाचार को जानने वाले श्रावक हैं। जिनकी धार्मिक अनुरक्ति बडी विशिष्ट है और कभी न डोलने वाली जिनकी स्वाभाविक भक्ति है। तर्कों के आघातो से और प्रतिकूल वातावरण से भी जिन श्रद्धालुओ की श्रद्धा प्रकम्पित नही होती। परिमित व्यय मे ही जिनको आनन्द है, फिर भी दान के लिए मति कृपण नही है। जिनका अतिथि-सत्कार सदा स्मरणीय है और जिनके हृदय मे यवनो के आगे सिर न झुकाने वाले, सूर्यवंश शिरोमणि महाराणा प्रताप आदि वीरवरो का उज्ज्वल गौरव विराजमान है। जिन्होने निश्चल पतिव्रत-धर्म का परिपालन किया है, ऐसी पद्मिनी आदि महासतियो के पवित्र शील से जहाँ की स्त्रियाँ परिपूर्ण गौरवान्वित है। सब कुछ सुन्दर-सुन्दर अनुभव करते और ग्रामानुग्राम विहरण करते हुए ये साधुजन परम आनन्द को प्राप्त हुए।

## द्वितीय समुच्छ्वास समाप्त

---

पुन. प्रतिलोम कर्षति शम्बाकरोति' इति सिद्धान्त-कौमुद्याम्। ३ अग्रा-प्रधाना। ४. 'शील-धर्म-साधुषु तृन्' तद्योगे द्वितीया।

तृतीयः समुच्छ्वासः | *

प्रखरतर-दिवाकर-करनिकरैस्तातप्यमानमुर्वीतलं शीतलयन्निव, चिराय निपीतनीर-समूच्छित-तृणोत्करमङ्कुरयन्निव, दाघज्वरकर-निदाघनृ-तेजो निराकुर्वन्निव, अत्युष्णता प्राप्तप्रसारातिसाराद्युपता-पान् निर्मूलयन्निव, अलमालिङ्गितातिनिम्नतल कूपजलमुन्नयन्निव, नग्नीभूताखिलविभागान् धूलिधवलितान् मरुतडागान् वा:प्रवाहै-स्तृप्नावयन्निव, मालिक-मनोरथै सहोद्यानानि सफलयन्निव, अखिलजगज्जन्तुजात जीवयन्निवाऽकस्मादुदीचीनो नवीनो विभ्रज्ज-लवेगो मेघो विहायस्युन्ननाम।

श्याममपि काममाह्लादकरं जात नभस्तलम् जलदागम-मह-प्रदर्शनशूरैरिव मयूरै सशब्द नृत्यमारब्धम्। सम्मुखीनं स्वागतमुद्भावयन्त वोड्डीनगतयोऽभवन् शकुनयः[१]। भ्रमितुं लग्ना बला-हकराज वर्धापयन्त्य इव विहायसि बद्धपंक्तयो बलाका[२]। मेघानुगामिनी सौदामिनी स्वभर्तु शुभागमन सूचयन्तीव चमच्चरी-कर्तुम् प्रवृत्ता। तत्कालं तस्तरिरे[३]ऽखिलमपि विष्णुपदं[४] काद-म्बिन्य[५]। तद् दुर्दिनमपि[६] मुदिनमिवाऽऽनन्द जगज्जीवातु-जलद-दर्शनाज्जाग्रज्जीवलोक। पुरास्तोकरूपेण शनैः किमप्यारभणीयमितीव नीतिज्ञो नीरदो धीर ध्वनयन् विरलाभिर्धाराभिर्मन्दं प्राक् वर्षितुं

१ चिल्लपक्षिण। २ वगुला, इतिभाषा। ३. आच्छादयामासु।

## तीसरा समुच्छ्वास

सूर्य की प्रचण्ड किरणो के समूह से अत्यधिक उत्तप्त भूमि-तल को शीतल करता हुआ, बहुत देर से पानी न मिलने के कारण समूर्छित तृण-समूह को अंकुरित करता हुआ, दावज्वर को पैदा करने वाली ग्रीष्म ऋतु के तेज को निस्तेज बनाता हुआ, अतिशय घोर गर्मी के कारण पसरे हुए अतिसार आदि उपतापो को निर्मूल करता हुआ जिसने तल का आलिगन कर लिया और जो बहुत नीचा हो गया है ऐसे कुँए के पानी को ऊँचा उठाता हुआ, जिनके सब हिस्से नंगे हो गये है और धूल से धवल हो गये है ऐसे मरुधर भूमि के तालाबो को पानी के प्रवाह से छलाछल करता हुआ, बागवानो के मनोरथो के साथ ही उद्यानो को सफल बनाता हुआ, समग्र ससार के प्राणी-वर्ग को जीवनदान देता हुआ मानो जल से परिपूर्ण नया मेघ आकाश मे अकस्मात् ऊँचा उठा।

आकाश पटल काला होते हुए भी बहुत आकर्षण और आनन्ददायक बन गया। जलद आगमन के उत्सव मे प्रदर्शन-शूर मयूरो ने अपनी मधुर आवाज के साथ नृत्य प्रारम्भ कर दिया। चीले आकाश मे उडने लगी, मानो मेघ का सम्मुख जाकर स्वागत कर रही हो। मुदिर को बधाई देती हुई-सी बद्ध-पक्ति बलाकाएँ गगन मे पर्यटन करने लगी। मेघ की अनुगामिनी बिजली अपने पति के शुभागमन की सूचना देती हुई बार-बार चमकने लगी। सारे नभो-मडल को तत्काल ही मेघमालाओ ने आच्छादित कर लिया, उस दुर्दिन को भी जगज्जीवन औषध के समान जलद-दर्शन के कारण सब प्राणियो ने सुदिन की तरह आदर दिया। पहले पहल थोडे रूप मे ही कुछ प्रारम्भ करना चाहिये, मानो इस नीति को जानते हुए 'पहले मेघ ने धीमे शब्द करते हुए

---

४ विष्णुपद—नभ। ५ कादम्बिनी—मेघमाला। ६ दुर्दिनं मेघजं तमः।

प्रवृत्तः। दानशौण्डीरैर्न स्तोकं स्तोकं विश्राणितु[1] शक्यमितीव वेगमागतस्तडित्वान्[2] धारासारैः समन्ततो दानशीलतां दर्शयामास। नेयं पेयं करगेहृत्य कैरपि मदीयमम्भ इत्यूर्जितगर्जित-व्याजेन घोषणा-पटहं वादयन्निव पुनर्वारिदान-वदान्यतामुत्कर्षयामास। नहि व्यधायि निम्नोन्नत-भूभेदोऽमृत[3] वितरता विशालहृदयेन जलमुचा। जवेनाऽजनिष्ट रोदसी[4] जलमयी। मौनमालम्बिरे नभोऽम्बु पेपीयमाना वनीहाः[5]। हिमालयात्पतत्स्वर्गापगापयः पूरमनुकर्त्तुमुत्सहिरे पर्वतेभ्योऽवतरन्तः पानीय-प्रवाहाः। नदीयन्ति[6] स्म नगरवीथयोऽपि क्षणं पाथोद-कृपाकटाक्ष-लक्षिताः। क्रीडासलग्नचित्ता दिगम्बरीभूता गतव्रीडा बाला सलिलमध्ये पलायाञ्चक्रिरे निर्भयमितस्ततोऽनिर्वचनीयसुखमनुभवन्तः। सर्वा अपि मलाविला आपः स्वपापमपाकर्त्तुकामा इव सिद्धापगा[7]—सधर्मिणीं कामपि महानदीमशिश्रियन्। नद्योऽपि सद्यः पातुकैः प्रसृतैः पानीयप्रवाहैः परिपूर्णोदरा यौवनोन्मादमादधाना युवतय इव वक्रगतयः कुल-मर्यादामुपेक्षमाणाः सवेगं समुद्राभिमुखं[8] प्रचेलुः।

अहो! अन्याहशेव सपत्नं, सकलमपि वर्त्तावरणम्[9]-परिहितहरित-चीनांशुक-परिधाना नव्यवधूरिव शुशुभे वसुन्धरा तदानीम्। अनालस्याः शस्यवाप-प्रसिता धृतहलाद्युपकरणा वृषभैः सह स्व-स्वक्षेत्रेषु प्रतस्थिरे सोत्साहं कार्षिकाः। पूर्वमेव शम्वाकृतेषु क्षेत्रेषु बीजाचक्रिरे शुभोदर्कमाशंसवस्ते। केचिद्धलिनः सलिलमये क्षेत्रे शालीनुवाप, केचिन्मुद्ग-माष-मकुष्ठ-कलाय-कुलत्थादीनामुप्तिं विदधिरे, केचिदाढकीपरिवृतं जूर्णा[9]ह्वयमवापिषुः; मकोयधान्य[10]मवापि/पुनर्भूरिशो जनैः। इत्थं प्रावृट् सर्वैरपि हृदा सदकारि हिरुक् पतिविरहितायाः हरिणाक्ष्याः।

---

१ दानुम्। २ मेघः। ३ जलम्। ४ द्यावाभूमी तु रोदसी इति हैमः।

सामान्य बूँदा बूँदी से वर्षा प्रारम्भ की। दानवीर कभी थोडा-थोड़ा दान नहीं दे सकते मानो इसी बात का विज्ञापन करते हुए मेघ ने फिर चारो तरफ बडे जोर शोर से वर्षा कर अपनी दानशीलता का परिचय दिया। कोई भी मेरा पानी मनचाहा ले जाये अथवा पीये, प्रचण्ड गर्जा-व्याज से मानो यह उद्घोषणा पटह बजाते हुए पुन गहरी वर्षा कर अपनी दान-उदात्तता का उत्कर्ष दिखाया। जल वरसाते हुए मेघ ने ऊँची-नीची भूमि का कोई भेद नही रखा। सब जगह समान रूप से बरसा। बहुत जल्दी ही आकाश और धरती जलमय बन गई। चातको ने गगन का निर्मल जल पी तृप्त होकर मौन धारण कर लिया। पर्वतो से गिरते हुए पानी के प्रवाह हिमालय से उतरती हुई गगा नदी के पूर का अनुकरण करने को उत्साहित हो उठे। मेघ की कृपा-कटाक्ष-लक्षित नगर की गलियाँ भी एक क्षण के लिये नदी का सा आचरण करने लगी। क्रीडा मे सलग्न वस्त्र-रहित लज्जा से अनभिज्ञ बच्चे अनिवर्चनीय सुख का अनुभव करते हुए बहुत देर तक पानी मे इधर-उधर दौडते रहे। इधर-उधर के सारे मैले पानी ने मानो अपने पाप को मिटाने के लिये गगा के समान किसी महानदी का आश्रय ले लिया। नदियाँ भी अपने मे चारो तरफ से गिरने वाले जल-प्रवाहो से परिपूर्ण भरी हुई यौवन का उन्माद धारण करने वाली युवतियो की तरह बाँकी गति वाली बनकर कुल मर्यादा की उपेक्षा करती हुई अति आकुलता से समुद्र की ओर चलने लगीं।

सारा ही वातावरण दूसरे ही प्रकार का हो गया। वसुन्धरा हरे रग के बहुमूल्य वसन को धारण करने वाली नववधू के समान खिल उठी। आलस्य को छोडकर हल आदि साधनो को लेकर धान्य बोने को उद्यत कृषको ने बैलो के साथ अपने-अपने खेतो को प्रस्थान किया और शुभ फल की कामना करते हुए उन्होंने पहले से जोते हुए खेतो मे बीज बोये। कुछ किसानो ने पानी से भरे खेतो मे चावल बोये। कई किसानो ने मूँग, उडद, मोठ, मटर और कुलत्थ आदि अनाज का वपन किया। कुछ किसानो ने आढकी (तूवेर) से परिवृत ज्वार बोई और बहुतेरो ने मकई (मक्का) का वपन किया। इस प्रकार प्रिय-वियोगिनी स्त्री के सिवाय सब लोगो ने वर्षा काल का हृदय से स्वागत किया।

---

५ चातका। ६ नद्य इवाचरन्ति। ७ गङ्गा। ८ पक्ष-मुद्रा-द्रव्य तत्सहिता समुद्रा घनिन। ९ जुवार। १० मक्का (मकई), इतिभाषा।

इतोऽत्रासाथि राजनगरवासिभिस्त्रासकैर्यन्चतुर्भिरनगारैः सह भिक्षुनामा महामुनिरत्र प्रावृड् - निवासार्थमागच्छति । भृशमौत्सुक्य माभेजाना लघवो गुरवश्च श्रद्धालव संभूता प्राप्तसन्देशविषये परस्परमित्थमालेपु—"कौतस्कुतोऽय , वाचिकोऽथवा लिखित सन्देश आगत ? के सन्त्यमी महामनसो भिक्षुरित्याख्यया ख्याति-माप्ता महामुनय । कीदृशी प्रकृतिरेतेपाम् । कैस्तत्र विनयपत्र प्रेषि । कथमतर्कितमेतेपामत्रागमनम् ।' इत्याद्यान् पन्ति परी-पृच्छ्यमानान् प्रश्नान् समाधानुकाम कश्चिन्मर्मज्ञो वाक्पटुर्नर सविस्तर तद्वृदन्तमाविर्भावयितु लग्न —"अद्यैव कश्चिद् विश्वस्त सन्देशवाहको, वाचिक लिखितमपि च सन्देशमादाय समागात् । ततो मया सम्पूर्ण रहस्य सम्यक् पर्यज्ञायि । अहो ! किं वच्मि ।-अस्ति परममस्माक सौभाग्यम्, यद् वीतदम्भा स्फीत-कीर्तयो वैराग्यभाजो मुनीश्वरा एतत् पुरं पावयिष्यन्ति । श्रीभिक्षु-स्वामिना पूर्वाऽऽचरितं चरितमपि श्रोतव्यमस्ति यत् कथमेभिर्गार्हस्थ्य परित्यक्तमिति अवदधता सर्वेऽपि श्रोतुमुत्सुका श्रावयाम्यह तद् यथाश्रुतम् ।"

विलसति मरुधरदेशे नद्युपकण्ठ-काण्ठा-प्रदेशे योधपुर-शासनान्त-र्वर्त्ति 'कण्टालिय' नामक समृद्धमधिष्ठानम् । राष्ट्रवरवंशीया[१] योधपुरेशितु[२] सामन्तता स्वीकुर्वाणा महामान्या राजन्यवंशजा मदनसिंहाभिधाना , धर्म - राजनीतिविदोऽधिपा । तत्रोसवशीयाना जैनानामुदारा वसति । तेषु शुक्लार्चागोत्रजो[३] धर्मिष्ठो भद्रप्रकृति-र्व्यापारकुशलश्च- वल्लभजिन्नामक[४] श्रेष्ठी प्रतिवसति स्म । तस्य कुलीना शालीना प्रवीणा प्रतिव्रता धर्मनिरता कुलदीपिकेव

---

१ राठोड, इतिभाषा । २ जोधपुर नरेश की, इतिभाषा । ३ सुकलेचा

इधर राजनगर निवासी श्रावको ने भी जाना कि चार मुनियो के साथ भिक्षु नाम के महामुनि यहाँ वर्षावास विताने आ रहे है। अतिशय उत्सुकता से बडे-छोटे श्रावको ने मिलकर प्राप्त सन्देश के विषय मे, बातचीत की—"यह वाचिक अथवा लिखित सन्देश कहाँ से आया है? ये भिक्षु नाम से ख्यातिप्राप्त महामना महामुनि कौन है? इनका स्वभाव कैसा है? इनके लिये वहाँ किसने प्रार्थना पत्र भेजा। इनका आगमन ऐसे अकल्पित ही कैसे हुआ?" इत्यादि चारो तरफ से पूछे जाने वाले प्रश्नो का समाधान करने के लिए कोई एक मर्मज्ञ और वाक्पटु मनुष्य विस्तारपूर्वक उस बात को प्रकट करने लगा—"आज ही कोई विश्वस्त सन्देशवाहक वाचिक और लिखित सन्देश लेकर आया है। उससे मैंने पूरा रहस्य अच्छी तरह से जाना है। अहा! क्या कहूँ? हमारा परम सौभाग्य है कि निश्छल, उज्ज्वल कीर्ति वाले वैराग्यवान् महामुनि इस शहर को पवित्र करेंगे। श्री भिक्षु स्वामी का पूर्ववृत्तान्त भी सुनने योग्य है कि कैसे इन्होने गृह परित्याग किया? सब ध्यान से सुनो! मैं उसे यथाश्रुत सुना रहा हूँ।"

"मरुधर देश मे जोधपुर राज्य के अन्तर्गत काठा-प्रदेश मे नदी के निकट 'कण्टालिया' नामक एक समृद्ध ग्राम है। वहाँ जोधपुर राजा के सामत राठोड-वंशीय, राजकुल मे उत्पन्न धर्म और राजनीति मे दक्ष, महामान्य श्री मदन सिंह नाम के राजा हैं। वहाँ ओसवाल जैनो की बहुत बडी बस्ती है। उसमे सुखलेचा गोत्र मे उत्पन्न, धर्मिष्ठ, भद्र प्रकृति और व्यापार कुशल 'बल्लू जी' नाम के एक सेठ रहते थे। उसके कुलीन, शालीन, हर कार्य मे प्रवीण, और धर्म-निरत कुलदीपिका के समान 'दीपा' नाम की पतिव्रता सहधर्मिणी

---

गोत्र, इतिभाषा। ४ बल्लूजी नाम के, इतिभाषा।

दीपाभिधा सधर्मिणी। सा मुमुखापि दुर्वाक्योच्चारणे विमुखा, सोत्कृष्टा सत्यपि कापथप्रस्थितानामुपस्थितावसती[1], नियमादि-मानिन्यपि वृत्तितो नित्यममानिनी। तस्या अलक्षितकैतव दाक्ष्यम्, अपश्यद्दुर्गुणा दृष्टि, अनरुन्तुदा[2] वचनावलि, अनाशंसिनी शुश्रूषा, अकृतप्रदर्शना प्रवृत्ति, असाधारणा भक्ति, अकारणिकी प्रीति, अनालस्य कृत्यम्, अरूढिमती मेधा, अविच्छिन्न प्रारम्भ, अनुत्सेकि साफल्यम्, निसर्गनिर्मला नीति, शुभोदर्क[3] प्रारम्भ, सद्गुणेष्वाकर्षणम्, नित्यमुपयुक्ता क्रिया, इङ्गितज्ञा प्रज्ञा, लज्जानमिता च दृष्टि शोभते स्म।

सैकदा सुखशय्यायां शयाना क्ष्वेडानादैर्निनादितकाननं पञ्चाननं स्वप्ने प्रेक्ष्य मुक्ति[4] सन्तोषमिव गर्भं बभार। आपन्नसत्त्वा[5] साऽम्बा यातातथ्येनाऽऽपन्नसत्त्वा समजनि। तेजस्विनमुदरे दधाना प्राचीव सा तेजस्विनी सवृत्ता। क्षमशीलापि भीतेर्नामापि सोढुमक्षमा बन्धुजनैर्व्यलोकि। ब्राह्मीव सत्वरमुत्तरोत्तरदानै परान् निरुत्तरीकुर्वतीव सा सर्वैरन्वभावि। विषमया समस्यया तस्या पुरस्तत्काल सरलयाऽभावि। देव्या-इवाऽऽपातकटुरपि[6] परिणामपटुस्तस्या आदेश पारिवारिकै ससम्मान प्रत्यश्रावि। शुक्लपाक्षिकी ज्योत्स्नेव तस्या धार्मिकी रुचि शुभ्रीभवन्ती प्रत्यहमदीपि[7]। इत्थ शरीरावयवै सह गुणैरपि गुर्व्वी जायमाना सा भृशमशोभत। गर्भस्थिति परिपालयन्ती तात्कालिक दोषान् मुञ्चन्ती कृष्णमिव श्यामलच्छायं भूरिशुभलक्षणोपेत सुन्दराकृति-संस्थान पिण्डीभूतमालोकमिव नश्यत्तमोजातं स्वतोऽन्वीयमान-शुभ-मुहूर्त्त घटी—करणलग्नादिव्रातं निरामय जातमसूत सा।

---

१ असती—अविद्यमाना। २ अमर्मस्पृग्। ३ उदर्कस्तद् भवफलम्, भाविशुभफलमित्यर्थ। ४. निर्लोभता। ५ गर्भवती। ६ अङ्गीकृतम्।

थी। वह समुख होते हुए भी दुर्वाक्य बोलने मे सदा विमुख थी। उत्कृष्ट सती होते हुए भी कुमार्ग मे प्रस्थान करने वालो की उपस्थिति मे सदा अविद्यमान रहती थी। नियम आदि मानवाली होने पर भी व्यवहार मे नित्य अमान-वाली थी। उसकी दक्षता कपट से रहित थी। किसी के मर्म को नही स्पर्श करने वाली उसकी वाणी थी। उसकी सेवा-वृत्ति भी निस्पृह थी। विना प्रदर्शन की प्रवृत्ति थी। असाधारण भक्ति थी। स्वार्थहीन उसकी प्रीति थी। आलस्यरहित उसका कार्य था। रूढि के आग्रह से मुक्त उसकी वुद्धि थी। वीच मे नहीं टूटने वाला और शुभ्र फल वाला उसका प्रारम्भ था। किसी कार्य मे सफलता मिलने पर वह घमण्ड नही करती थी। उसकी स्वभाव से ही निर्मल नीति थी। जिसका परिणाम शुभ हो ऐसा ही कार्य वह प्रारम्भ करती थी। उसका सद्‌गुणो मे ही आकर्षण था। वह नित्य उपयुक्त क्रिया ही करती थी। इंगित से समझने वाली उसकी प्रज्ञा थी। दुर्गुणो को नहीं देखने वाली और लज्जा मे विनत उसकी दृष्टि थी। इन सद्‌गुणो से वह बहुत सुशोभित थी।

एक वार वह सुख-शय्या पर सोई हुई थी। क्ष्वेडानाद से सारे जगल को गुंजाता हुआ सिह उसने स्वप्न मे देखा। सिह-स्वप्न देखकर, निर्लोभता जैसे सन्तोष को धारण करती है, उसने गर्भ धारण किया। गर्भवती होने पर वह यथार्थ मे सत्वशालिनी वन गई थी। अपने उदर मे एक तेजस्वी को धारण करती हुई वह प्राची की तरह तेजस्विनी वन गई थी। वह क्षमाशील होती हुई भी उसे भय का नाम तक न सुहाता था। वह सरस्वती की तरह शीघ्र उत्तर देकर लोगो को निरुत्तर कर देती थी। विषम समस्या भी उसके सामने सरल वन जाती थी। पहले कटु लगने वाला भी उसका आदेश सव परिवार वाले परिणाम-सुन्दर होने से देवी के आदेश की तरह ससम्मान स्वीकार करते थे। उसकी धार्मिक रुचि शुक्ल-पक्ष की ज्योत्सना की तरह प्रतिदिन वृद्धिगत हो रही थी। इस तरह वह शरीर अवयवो के साथ गुणो से भी गुर्वी (महान्) वनती हुई वहुत शोभित हो रही थी। गर्भकाल के दोषो का परिहार करती हुई और गर्भ-स्थिति का सम्यक् परिपालन करती हुई उसने कृष्ण के समान श्यामल द्युतिवाले वहुत शुभ लक्षणो से युक्त, स्वस्थ पुत्र को जन्म दिया। अन्धकार को मिटाने के लिए पिडीभूत आलोक जैसा वह वहुत सुन्दर आकार एव सस्थान वाला था। उसके जन्म के समय शुभ-मुहुर्त, घडी, करण, लग्न आदिक स्वत अनुगामी वने थे।

---

७ कर्तरि णिच्–'दीप–जनेति' सूत्रेण।

पृथ्वी कल्पवृक्षमिव, मेघमाला जलमिव, शुक्तिर्मौक्तिकमिव च त असाधारणमर्भकं प्रसूयमाना सा सम्यक् सवित्रीपदं पवित्रयामास । कति न सन्ति समासमीनास्ता[१] मातरा या अस्तोकानि तोकानि सुवाना अपि नहि जगज्जनवदनारविन्देषु नर्तितनामधेया भवन्ति । गुणवत् त्वेकमपि वंशमुज्ज्वलयति धवलयति चातीत-तिमिर-तिरोहितान् पूर्वपितॄनपि । पूर्णतामिते शुचिकर्मण्यविषमे दशमेऽहनि भविष्यद् - भिक्षु - भावमालोकमानेनेव मौहूर्त्तिकेन नवजातस्य शिशो 'भिक्षु.' इति मङ्गलमभिधानमुदघोषि । उज्ज्वलायतीना प्रसूतीना विलसन्ति बाल्येऽपि विलक्षणानि लक्षणानि । न भवति किमुत जातमात्रोऽपि भासुरगात्रो गभस्ति[२] । न जायते किमु कोटिकोटिनेत्राभिनन्दनीयोऽविकसितकलोऽपि वन्दनीयोऽत्र बालचन्द्र. । अङ्कादङ्क समाह्वियमाणोऽत्यन्त-प्रेम परवतीभिर्युवतीभिरुरोजोपपीडमाश्लिष्यमान सुधाधौतं तन्मुखसरोजं निपीय दृग्दोषाशङ्कया तत्काल थुत्क्रियमाण स स्तनन्धयो विनयवतो बोध इव प्रतिदिन ववृधे । कदाचिज्जानुभ्या हस्तौ पुरस्सयन् धावमानो जायते स्म दृष्टेरविषयो जनन्याः । 'क्व गतो' मे गृहमणिरित्यधीरध्वनिना शब्दायितायामम्बायामन्यया रमण्या वलात् प्रसूपकण्ठ नीयमान स्फुरद्धास्य स्मेरास्य स शिशुर्भृ श तोषं पुपोष । अस्फुटापि स्खलिताक्षरापि विशृङ्खलार्थापि तस्य सारल्यतरलिता सरस्वती[३] सुधातोऽपि स्वादीयसी सर्वैरन्वभावि । यदा स जातो रिङ्खणक्षमस्तदा[४] मातरमङ्गुलिग्राह गृह्णन् चलन् सन् जातु 'मामङ्के कुरुष्व' इति रोरुद्यमानोऽम्बामनुरुरोध । कदाचित्समवयस्कैः शावैः सार्धं भोजन-पानादि-समयमतिवाहयन्नागतो मात्रा किञ्चिदरुणया दृशा विलोक्यमान कमपि व्यपदेशमादाय स्वमनागस[५] निदर्शयामास स ।

---

१. प्रतिवर्षविजननशीला । २ सूर्य । ३ वाणी । ४ घुटनो से चलने

पृथ्वी कल्पवृक्ष को, मेघमाला जल को और सीप मोती को, इसी तरह असाधारण बच्चे को जन्म देकर उसने जननी के पद को सम्यक् चरितार्थ किया। प्रतिवर्ष सन्तानो को जन्म देने पर भी जिनका नाम ससार मे मनुष्यो के मुखारविन्दो पर नही नाचता ऐसी अनेक माताएँ है। गुण-शून्य अनेक सन्ताने भी कुछ नही करती पर गुणवान तो अकेली भी वश को उज्ज्वल और अतीत के अन्धकार मे डूबे हुए पूर्वजो को प्रकाश मे ला देती है। सूति-कर्म के पूर्ण होने पर दसवे दिन भविष्य मे यह 'भिक्षु' होगा, मानो इस बात को आलोकित करते हुए ज्योतिषी ने नवजात बच्चे का मगल नाम 'भिक्षु' रखा। उज्ज्वल भविष्यवाली सन्तानो के बाल्यकाल मे भी विलक्षण लक्षण होते हैं, क्या उदयकाल मे सूर्य भासुर कान्तिवाला नही होता ? अविकसित कलावाला भी द्वितीया का चन्द्रमा क्या कोटि-कोटि नेत्रो के द्वारा अभिनन्दनीय और वन्दनीय नही होता ? गोद से गोद मे लेती हुई अत्यन्त प्रेमवती युवतियाँ उसे अपनी छाती से चिपका लेती थी। उसके सुधा-धौत मुख-कमल का चुम्बन करती हुई दृष्टि-दोष की शंका से तत्काल थुत्कारती थी। इस तरह वह बच्चा विनयवान के ज्ञान की तरह प्रतिदिन बढने लगा। कभी-कभी वह हाथो एव पैरो से रेगता हुआ माता की आँखो से ओझल हो जाता था। 'कहाँ गया मेरा गृहमणि' ऐसा बोलती हुई माँ व्याकुल हो उठती थी, तभी अन्य स्त्री द्वारा बलपूर्वक लाया हुआ वह स्मितानन खिलखिलाता हुआ बच्चा उसके सुख को अतिशय बढा देता था। अस्फुट-स्खलित उच्चारण वाली और विशृ खल अर्थवाली भी उसकी सारल्य से आप्लावित वाणी सबको सुधा से भी अधिक स्वादिष्ट लगती थी। जब वह थोडा घुटनो के बल चलने योग्य हो गया तब माँ की अँगुली पकड कर चलता हुआ कभी 'मुझे गोद मे ले' रोता हुआ हठ करता था। कभी वह समवयस्क बच्चो के साथ भोजन-पानी आदि के समय को लाँघकर घर आता तो माँ के लाल आँखे करने पर कोई बहाना बनाकर अपने को निर्दोष सिद्ध कर देता था।

---

वाला, इतिभाषा। ५ निर्दोषम्।

एवं विशद-विवेकेन सह वयसा वर्धमानो यदाऽभवत् सप्ताष्ट-वर्ष-देशीयस्तदा तत्रस्थ - स्थविरोपाध्याय - सकाशादग्रहीद् वणिग्-जनोचिता तृतीय-नेत्र-संकाशा विशिष्टा विद्याम् । तैलबिन्दुरिवाम्भसीति निदर्शनेन सूत्ररूपेण शिक्षितापि विद्या तस्योर्वर-मस्तके महाभाष्यरूपेण परिणाममाप्ता । निसर्गजा तस्यौत्पातिकी[1] सर्वतोमुखी प्रतिभा बृहतोऽपि विदुषो विस्मापयाम्बभूव । नेत्र-मुखकराद्यभिनयै परचेतोगतं चेतितु[2] सम्यक् शशाक स । विहित-वृथा कैतव-कलापाना पापानामपि कपट-नाटकपाटवं प्रत्यक्ष मुद्घाटयामास च । समग्रेऽपि तत्र प्रदेशे तस्याऽवदाता कीर्त्ति र्ननर्त्त नराणा चञ्चद् - वदनमञ्चके । पुनर्व्यापार - कौशलेन समस्तगृह-भारमपि युग्यवत्स इव तस्मिन् वहमानेऽनाधिमयं जीवनं व्यतीयन्तो ज्येष्ठा अस्य सत्पुत्रस्यानृण्यमुद्भावयामासु । यदा कदाचिदागच्छता जैन-मुनीना संसर्गाज्जैन-तत्त्वाना सामान्य-ज्ञान-माकलितमेतेन । सार्था नवपदार्थास्तल्लक्षणानि स्पष्टयताऽनेन साधु हृदयसात्कृता । अभव्यैरलभ्याना षड्द्रव्याणामैदम्पर्यमपि[3] वर्यतया विविक्तिमानीतवानसौ । विषयकषायोपशमनमेव मुक्तिगमनमस्तीति निःसन्देहं प्रतीतिपथमायातमेतस्य । मृत्-स्वर्णयोरिव देहदेहिनो पार्थक्यमन्तर्दृशा निभालितमेतेन । बाल्यकालादेवास्य संस्कृतान्तः-करणभूमौ वैराग्याङ्कुर प्रस्फुटतामाजगाम ।

विरज्यमानोऽपि स्वजनानामत्याग्रहात्पाणिग्रहणविधिं निर्व्यूढ-वानसौ । रूप-लावण्यवती सतीमतल्लिका पुण्यात् स धर्मिणी सधर्मिणी-मवाप । पत्युरनुगमनमेव तस्या मानस व्रतम्, निरुपधि मधुरभाषणमेव तस्या मुखस्य व्यसनम्, देवानामिवाऽभ्यागताना सेवाहेवाकिनी नित्यमस्यावृत्ति', याचकेभ्य कराभ्यामेवोत्तरदानमनया शिक्षित, नहि

---

१ हाजिर–जवाबवाली बुद्धि, इतिभाषा । २ ज्ञातुम् । ३ तात्पर्यम् ।

ऐसे विशद विवेक के साथ वय मे बढता हुआ जब वह सात, आठ वर्ष का हुआ तब उसने वहाँ के निवासी एक वृद्ध अध्यापक से तृतीय नेत्र के समान वणिक जन-योग्य विशिष्ट विद्या ग्रहण की। पानी मे तैल-बिन्दु की तरह सूत्र रूप मे सीखी हुई विद्या भी उसके उर्वर मस्तिष्क मे महाभाष्य के रूप मे परिणत हो गई। उसकी नैसर्गिक सर्वतोमुखी औत्पातिकी प्रतिभा ने बडे-बडे विद्वानो को भी विस्मित कर दिया। वह नेत्र-मुख और कर आदि के अभिनय से दूसरे के दिल की बात को अच्छी तरह समझ जाता था। बडे आडम्बरवाले दम्भियो की पोल खोलकर उनके कपट-नाटक का भी पर्दाफास कर देता था। उस प्रदेश मे उसकी उज्ज्वल कीर्ति मनुष्यो के मुख पर नाच रही थी। व्यापार-कौशल से समस्त गृहभार को जुए मे जुते वृषभ की तरह वहन करने लगा। निश्चिन्त जीवन जीते हुये ज्येष्ठजनो ने इस सत्पुत्र की उऋणता उद्घोषित करदी थी। जब तब आनेवाले जैन मुनियो के सम्पर्क से जैन-तत्वो का ज्ञान भी इसने सीखा था। अर्थ-सहित नव पदार्थ और उनके लक्षण भी इसने भली-भाँति हृदयगम किये थे। अभव्यो को अलभ्य षड्द्रव्यो का रहस्य भी इसने भलीप्रकार भिन्न-भिन्न पहचाना था। विषय-कषाय का उपशमन ही मुक्ति गमन है, इसकी इसे निश्चित प्रतीति हो गई थी। मिट्टी और स्वर्ण की तरह आत्मा और शरीर की भिन्नता इसने अन्तर्दृष्टि से देख ली थी। बचपन से ही इसके शुद्ध अन्त करण की भूमि मे वैराग्य का अंकुर उग गया था।

विरक्त होते हुए भी भिक्षु ने स्वजनो के अत्यन्त आग्रह के कारण विवाह-प्रथा को निभाया। आपने पुण्योदय से रूप लावण्यवती, सती-शेखरा और धर्मवती सद्धर्मिणी पाई। पति का अनुगमन ही उसका मानसिक व्रत था। स्वभाव से ही वह निश्छल मधुर-भाषिणी थी। देवो की तरह वह अतिथियो की सेवा-टहल किया करती थी। याचको को उसने हाथो से ही उत्तर देना

सुखोत्तरं दानम् । गुरूणां पुरतो विनयवती तद्वत् स्नेहशीला च लघीयसामग्रतः ।

परभागासहेन[1] खलेन नास्या जिह्वाग्रेण स्पृष्टम् । विहित-विवेकलोपेन कोपेन नान्दोलिताऽस्या देहयष्टिः । नित्यकुपथ्यया गुणेष्व-सूयया नहि कलुषितमस्याः पूतमन्तःकरणम् । नासीदस्याः शब्द-भाण्डागारेऽपशब्दानां सङ्ग्रहः । लज्जाभग्ननम्रे अक्षियुगलेऽस्या नहि विकाराः लब्ध-प्रसाराः । सामायिकादि-धार्मिकानुष्ठाने निष्प्रकम्प्या निष्ठाऽस्याः । प्राप्ततपोऽवसरा साऽऽसीदनवरतमग्रेसरा । अतो भिक्षोर्दाम्पत्यजीवितं परं स्पर्धनीयं गर्वणीयं[2] नितान्त-सुहितं विललास ।

इति श्री चन्दनमुनि-विरचितेऽभिनिष्क्रमणाख्ये महाकाव्ये
गद्यप्रबन्धे तृतीयः समुच्छ्वासः ॥

---

१. गुणोत्कर्षाऽसहेन । २. स्पृहणीयम् ।

सीखा था मुँह से नहीं। गुरुजनों के आगे विनयवती थी, वैसे ही छोटों के सम्मुख स्नेहशीला थी। गुणों के उत्कर्ष को न सहनेवाले कलह ने इसके जिह्वा के आगन का स्पर्श भी नहीं किया था। विवेक को निगल जानेवाला क्रोध कभी इसके देह को छू भी नहीं सका था। दूसरों के गुणों मे दोष दर्शन की वृत्ति असूया जो नित्य-निकृष्ट है, उसने इसके पवित्र अन्त करण को कलुषित नहीं किया था। इसके शब्द भाण्डागार मे कोई अपशब्द नहीं था। आँखें लज्जा से नीची होने के कारण इसके मन मे कोई विकारोत्पत्ति नहीं होती थी। सामायिक आदि धार्मिक अनुष्ठान मे ही इसकी अविचल आस्था थी। तप के अवसर पर वह सदा अग्रेसर रहती थी। इसलिये भिक्षु का दाम्पत्य जीवन दूसरों के लिये नितान्त स्पर्धनीय और वाञ्छनीय था।

## तीसरा समुच्छ्वास समाप्त



## चतुर्थः समुच्छ्वासः | *

अथैकदा पश्चिमाया रजन्या धर्मजागरणं जागरयता दीपाङ्गजेन व्यचिन्ति—"कोऽहम् ? किं शरीरमहम् ? नैवम्, शीर्यमाणं शरीरम् नात्मनस्तु नाश । किमिन्द्रियाण्यहम् ? नैवम्, अमीभि[1]र्विषयाणा संग्राहक कश्चिदन्य । अभेदादुपचर्यमाण वपुरपि चेद् मामकीनं नास्ति तर्हीतरत्त मदीय स्यादेव किम् ? अहो ! रात्रिदिव धावमानेनापि चेन्नलब्ध गन्तव्यमास्पदम्, तर्हि तेन धावनेन किम् ? अङ्कविरहितै केवलबिन्दुभिर्यत् साध्य तदेवात्मज्ञान-शून्यै शरीरिभि साधनीयम् । प्रातरारभ्य तल्पाऽऽश्रयणावधि सर्वमैहिकं कार्यमास्माकीनम् उत किमपि पारलौकिकम् ! वत ! इद कृतमिदं कार्यमित्येव कुविकल्प-तन्तुसन्तानै मस्मृति-पट सीव्यन् मन्तूयति[2] जन्तु प्रतिपलम् ।

धिग्-धिङ् मौढ्यम् ! ! येषा कृते जीवान् हिनस्ति, मृषावक्ति, अदत्तमादत्ते, अब्रह्म सेवते, द्रव्य सचिनुते, न गणयति शीत-ताप-मानाऽपमानादि-प्रातिकूल्यम्, स्वदेश रहयति[3], चहयति[4] च आश्वस्तानपि विभून्, ते दायादा किं नु तद्विपाकदायादा[5] भवितुमर्हन्ति ? सर्वविदितमवदातसत्यमेतत्, यत्—

"एक उत्पद्यते तनुमान्, एक एव विपद्यते ।
एक एव हि कर्म चिनुते, सैकक फलमश्नुते ।।

---

१ इन्द्रियै । २ 'मन्तु अपराधे' इति धातोरूपम्, अपराध्यति इत्यर्थ ।

## ★ | चौथा समुच्छ्वास

एक वार पश्चिम रात्रि मे धर्म-जागरण करते हुए दीपागज (भिक्षु) ने सोचा "मैं कौन हूँ ? क्या मै शरीर हूँ ? नही, शरीर तो क्षण-भगुर है, पर आत्मा का कभी विनाश नही होता। क्या मैं इन्द्रिय हूँ ? नही, इनके द्वारा विषयो का सग्राहक कोई दूसरा है। अगर अभिन्न माना जाने वाला शरीर भी मेरा नही है तब दूसरी वस्तु तो मेरी हो ही कैसे सकती है ? अहो ! रात-दिन दौडते हुए भी यदि गन्तव्यस्थान नही मिला, तो उस दौडने से क्या प्रयोजन ? अकरहित केवल बिन्दुओ मे कुछ भी सिद्ध नही होता है, यही आत्म-ज्ञान शून्य प्राणियो की स्थिति है। सुबह उठने से लेकर रात्रि मे सोने तक सव ऐहिककार्य ही किया जाता है, अथवा कुछ पारलौकिक भी ? खेद है ! यह किया, यह करना है, इन दुर्विकल्पो के धागो से ससार के पट को बुनता हुआ प्राणी प्रतिपल अपराध करता रहता है।"

धिक्कार ! धिक्कार ! इस मूढता को, जिनके लिए प्राणियो के प्राण लूटता है, मृषावाद वोलना है, चोरी करता है, अब्रह्मचर्य का सेवन करता है और द्रव्य का सचय करता है, तथा जिनके लिये शीत, ताप, मान, अपमान आदि की प्रतिकूलता नही गिनता, अपने देश तक का परित्याग कर देता है और विश्वास रखने वाले अपने मालिको को भी धोखा दे देता है। वे परिजन क्या उसके कटु परिणाम के भी भागीदार होगे ? यह सर्व विदित तथ्य है कि "मनुष्य अकेला ही आता है और अकेला ही जाता है, अकेला विविध कर्म करता है और अकेला ही उनका फल भोगता है।" फिर भी वह इस पर चिन्तन नही

३ त्यजति। ४ 'चहण् शाठ्ये' इति धातो रूपम्', वञ्चयति इत्यर्थ।
५ तद्विपाकभागभाज'।

तथापीद न चिन्ताविषयमेत्येतस्य, अहो ! विचित्रमिद मोहमहाशैलूपस्य नर्त्तन-कौशलम् ! अनित्ये नित्यावगम, विषे सुधासम्मोह, स्वप्ने जागर्याग्रह, असारे सार-निश्चय । हन्त ! कीदृक्षोऽय विषमोऽक्षिरोग —यत् सत्सङ्ग वन्हिज्वालमिव, सदुपदेश कर्णकण्टकमिव, तपस्तीक्ष्णशूलाग्रमिव, दानं हस्तदूषणमिव, ब्रह्मचर्य विषपानमिव, सत्यवर्त्म कदध्वमिव च पश्यति । प्रत्यक्ष गतागतिके जगति कथ नास्माक गूढपथमारूढपथ[1] जायते, नायते क्षणोऽपि प्रत्यायनीय:, न ज्ञायते तथाप्युन्मदिष्णुनाऽनेन कष्टसहिष्णुना ।

कष्टम् ! क्व गता मदीया मयि शश्वत् स्नेहमुदीरयन्तश्चिराशापाश-नियन्त्रिता यन्त्रकवद् रात्रिदिव धावमाना पूज्या पितर: ! किमनायि तै परासुतामाश्रयमाणैः स्वमञ्चित स्वापतेयम्[2] ! खलु यदर्जितं तदत्रैव वर्जितम्, स्वय तु रिक्त-हस्तै महाप्रयाणमावर्जितम् ।

अस्तु, कि करणीयमधुना मयेति विमृष्टव्यो विषय । रयप्राप्त-नदीपय इव प्रतिक्षणं वहति जीवनमिदम् । त एवाऽत्र धन्या मनीषिमूर्धन्या येऽन्यत् कार्यशतकमपहाय विधिवत् प्रथम धर्ममाराधयन्ति, साधयन्ति चात्मनीन कार्यम् ।"

इत्यादि-शुभ्र-विचारधाराभि कारानुकारि-जगत्-स्वरूप विभावयन् सत्यमात्मरूप दिदृक्षुर्भिक्षुर्वैरङ्गिको[3] बभूव ।

तद्दिनादारभ्य भिक्षोर्वृत्ति प्रवृत्तिश्चान्यादृशी जज्ञे । परम-कल्याणी वाणी नित्यं वैराग्यभङ्गी तरङ्गयामास । विमर्शगभीरा मुखमुद्रा बाह्यव्यवहारमुपेक्षमाणाऽजस्रमौदासीन्य-सङ्गिनी बभौ । नाट्टहास्यादिकमवकाश लेभेऽस्य परै सह सलपत । न तादृग्

---

१ मन: । २ धनम । ३. द्रष्टुमिच्छु ।

करता। अहो ! मोह रूप नटराज का नर्तन-कौशल कितना विचित्र है ? क्षण-भगुर मे शाश्वत की-सी श्रद्धा, विष मे अमृत का-सा मोह, स्वप्न मे जागरण का आग्रह और असार मे सार का दर्शन ! खेद ! यह कितना विषम नेत्र-रोग है कि मनुष्य सत्सग को अग्नि ज्वाला के समान, सदुपदेश को कर्णकण्टक की तरह, तप को तीक्ष्ण शूल के अग्रभाग के तुल्य, दान को हस्तदूषण के समान, ब्रह्मचर्य को विषपान के सदृश और सीधे सही मार्ग को बीहड पथ के तुल्य देखता है। प्रत्यक्षत ससार क्षण-ध्वसी है और भविष्य के एक क्षण का भी विश्वास नही, फिर भी यह कष्ट-सहिष्णु मन क्यो नही सही मार्ग पर चलता ?

ओह ! मेरे प्रति सदा स्नेह-सिक्त रहने वाले, चिर आशा-पाश से निबद्ध यात्रिक की तरह दिन-रात दौडनेवाले मेरे पूज्य पितृजन कहाँ गये ? क्या मृत्यु का वरण करते हुए वे अपने द्वारा सचित द्रव्य को अपने साथ ले गये ? जो भी अर्जित किया था वह सब यही छोड गये। स्वय तो खाली हाथो ही महाप्रयाण कर गये।

अस्तु, अब मुझे क्या करना चाहिए, यह चिन्तनीय विषय है। वेगवान नदी के पानी की तरह यह जीवन प्रतिपल बह रहा है। वे ही विद्वत्-शिरोमणि यहाँ धन्य हैं जो दूसरे सैकडो कार्यो का परित्याग कर पहले धर्माराधन करते हैं एवं आत्म-साधना करते है।

इस प्रकार शुभ-विचार-धारा के द्वारा ससार के स्वरूप को कारागृह के समान मानते हुए आत्मा का सही रूप देखने के इच्छुक भिक्षु विरागी बन गये।

उसी दिन से भिक्षु की वृत्ति और प्रवृत्ति दूसरी ही प्रकार की हो गई। परम कल्याणी वाणी नित्य वैराग्य को तरगित करती थी। चिन्तन से गम्भीर बनी हुई मुख मुद्रा बाह्य व्यवहार की उपेक्षा करती हुई आभ्यन्तर अन्वेषण मे सलग्न रहती थी। दूसरो के साथ संलाप करते समय उनके चेहरे पर कभी अट्टहास नही आता था। अब भोजन-पान मे भी वह स्वाद नही रह गया था

भोजन-पानादिषु रसलौलुप्यं यादृक् पूर्वमासीत्। स्नानाऽभ्यङ्गनादि-वैषयिक-सुखेभ्योऽतिदूरमेव मनः शान्तिमनुबभूव। यत्र स्थायिका चासिका शायिका चास्य तत्रैव स तत्त्वचर्चां चालयामास, संसाराऽसारतां दर्शयामास, वर्षयामास च ज्ञानामृतम्।

अकारणं पत्यौ किमप्यसाधारणं परिवर्तनं प्रेक्षमाणा भिक्षोः प्रणयिनी भ्रान्ता श्रान्ताऽशान्ता च संजाता। परामृशन्त्यपि तत्त्व-मविन्दमाना[1] वन्दमाना हृदयेशमन्ते पृच्छासाहसमकृत—"प्राणेश! आश्चर्यचकितेयं श्रीमच्चरण-सरोज-चञ्चरीकायमाणा स्नेहग्रथिला गृहिणी अलक्षित-पूर्वां भवद्वृत्तिं लक्षयन्ती, यत् साम्प्रतिकं सर्व-मपि कार्यजातमार्यपुत्राणां कामपि नवीनां रेखामुल्लिखति। जातप्रियवियोगिनामिव योगिनामिव वा श्रीमतां सावेगं वेगमास्ति-घ्नुते विमर्शवर्या चर्या। उच्चैः पतद्धवलवारिसंकाशं कृतदशन-प्रकाशं हासं नहि स्पृशति कर्ह्यपि कान्तानां[2] वक्त्रगतपत्त्रम्। कृतखेचरीमुद्राणां वाचंयमानामिव नाऽशनाया[3] नोदन्या[4] च धन्यानां रुचे प्राचुर्यमारचयति जातुचिदपि। अहिभोगेभ्य इव विषयभोगेभ्यो निर्भीकमपि बिभेति स्वान्तं श्रीमत्कम्। जागर्ति किमत्र प्रयोजनमिति बोद्धुमनर्हा तेऽर्धाङ्गिनी सजिज्ञासमनुयोक्तु-[5]मुदयुङ्क्त[6]।"

गभीरामुत्प्रास[7]लेखामुल्लिखन्ती भैक्षवी सरस्वती प्रणयिन्या प्रेर्यमाणा बद्धाक्षरा विललास—"देवि! आकारे प्रकारे त्वया साधूट्टङ्किता मे मानसी स्थितिः। न मां कापि बाधते बाह्यार्था-नुबन्धिनी शारीरिकी मानसिकी वा बाधा, परन्तु तत्त्वतो विचार्यमाणा सकलापि जागती[8] लीला वञ्चना-प्रपञ्चितेवाऽव-भासते मयि। संयोगलक्षणा बाह्यभावाः स्वभावादेव वियोग-

१ तत्वमलभमाना। २ पतिदेवानाम्। ३ बुभुक्षा। ४ पिपासा।

जो पहले था। स्नान अभ्यंगन आदि वैपयिक सुखो से तो अति दूर रहने मे ही इनका मन शान्ति अनुभव करता था। वे जहाँ खडे रहते, बैठते, सोते, वही तत्त्वचर्चा चलाते, ससार की असारता दिखाते और ज्ञानामृत की वर्षा करते।

पति मे अकारण ही यह असाधारण परिवर्तन देखकर भिक्षु की पत्नी भ्रान्त, श्रान्त और अशान्त हो गई। चिन्तन करते हुये भी जब कोई रहस्य हाथ नही लगा तो अन्त मे उसने प्राणेश से पूछने का साहस किया। "प्रियवर! जो पहले कभी नही देखी ऐसी आपकी वृत्ति को देखकर चरणो की दासी, आपकी स्नेह-विह्वल यह गृहिणी आश्चर्य-चकित है। क्योकि वर्तमान का आपका सारा व्यवहार कोई नई रेखाएँ खीच रहा है। प्रिय वियोगियो की तरह अथवा योगियो की तरह आपकी चिन्तनमय चर्या सवेग (वैराग्य) का वेग पा रही है। ऊँचे से गिरते हुए धवल पानी के समान उजली दन्त-पक्तियो का प्रकाश बिखेरने वाला हास्य कभी भी प्रियवर के मुख कमल का स्पर्श नही करता। खेचरीमुद्रा किए हुए योगियो की तरह आप श्री की भोजन-पान की रुचि अल्प होती जा रही है। आपका निर्भीक मन भी विषय-भोग से सर्प के फण की तरह डरने लगा है। इन सबके पीछे क्या रहस्य है? यह नही जानती हुई आपकी अर्धांगिनी जिज्ञासा पूर्वक पूछने का प्रयत्न करती है।"

पत्नी की जिज्ञासा से उत्प्रेरित हो गंभीर हास्य की रेखा खीचते हुये भिक्षु ने कहा—"देवी! आकार-प्रकार से तुमने मेरे हृदय की स्थिति को सही समझा है। बाह्य-अर्थ से अनुबन्ध रखने वाली मानसिक अथवा शारीरिक कोई भी बाधा मुझे उत्पीडित नही करती है, परन्तु यथार्थ मे जब विचार करता हूँ तो मुझे संसार की सारी लीला छलनामयी-सी लगती है। बाह्य-भाव जैसे संयोग लक्षणवाले है, वैसे ही स्वभाव से वियोग लक्षणवाले भी है।

---

५ प्रष्टुम्। ६ उद्यममकार्षीत्। ७ हास्यरेखाम्। ८ जगत्सम्बन्धिनी।

लक्षणाः। इहत्य सुखमपि दुःखपरिणतम्। परिजनाना प्रीतिरपि दरदस्नेहभीति। अत्रत्य सख्यमपि[1] सिकताभित्ति-प्रख्यम्। वन्धूना सम्वन्धा अप्यनिर्वाहित-निर्वन्धा।

प्रिये! अस्माभिर्वहुकृतमपि कि कृतं यदि न कृतमात्म-साधनम्, वहु ज्ञातमपि कि ज्ञात यदि न ज्ञात स्वरूपम्, वह्वर्जितमपि किमर्जित यदि नार्जित धर्मधनम्, वहु दत्तमपि कि दत्त यदि न दत्तमभयदानम्, पालितमपि कि पालित यदि न पालित ब्रह्मचर्यम्, वहु धृतमपि कि धृतं यदि च न धृत भगवच्छासनम्।

विनयशीले! किमेतादृशस्यैव नृभवस्य शास्त्रे दुर्लभता प्रत्यपादि! यत्र नात्मसाधना, न यत्र भगवदाराधना, न यत्र कोऽहमिति विवेक, न धर्माधर्मयोरपि च विचार। किम-शनायितु[2] उदन्यायितु[3] निद्रातुं रन्तुमन्ते च गन्तुमेवाऽत्रावतारो ह्यस्माकम्? किमिदमेव मानुप-जनुप सारम्? कि तर्हि तिरश्चामतिशयित नाम न कर्तव्यम्।

भद्रे! ततो निर्णीतमिति मया चेतसि यच्छीघ्रतया साधयामि स्वल्प-सुहित स्वहितम्। स एव कृतलक्षणो[4] विचक्षणो यो ज्वलज्ज्वलन-सदीप्तमन्दिरादविलम्वित सारभूत भाण्डजात प्रथमं वहिर्निष्कासयति, जहाति च निस्सारभूतम्, तद्वज्जन्म-मृत्यु-वित्रसामय-शोकादिदाव-दन्दह्यमाने विष्टपे[5] यो द्रुतमात्मानमेव पृथक्करोति स एव सफल-चेष्टो ज्ञानिना प्रेष्ठश्च[6]। अतोऽहं प्राक् स्ववल्लावल सतोल्य प्राप्तेऽनेहसि[7] जगदपि जिहासुरस्मि, एतदेव मदौदासीन्य-कारणम्, नान्यत् किमपि। न चित्रणीयमिदम्-

---

१ मैत्र्यम्। २ भोक्तुम्। ३ पातुम्। ४ गुणै. प्रतीत.।

यहाँ का सुख भी दुःख का ही प्रतिरूप है। परिजनो की प्रीति मे भी सदा कटुता की छाया मडराती रहती है। यहा की मैत्री भी रेत की भीत के समान है। बन्धुओ के सम्बन्धो का भी अन्त तक निर्वाह नही है।

प्रिये! हमने बहुत करके भी क्या किया, यदि आत्म-साधना नही की। बहुत जानकर भी क्या जाना यदि अपना स्वरूप नही जाना। बहुत अर्जित करके भी क्या किया यदि धर्म-धन का अर्जन नहीं किया। बहुत देकर भी क्या दिया यदि प्राणियो को अभय नही दिया। बहुत पालकर भी क्या पाला यदि ब्रह्मचर्य नही पाला। बहुत धारण करके भी क्या धारण किया यदि भगवान की आज्ञा को शिरोधार्य नही किया।

विनयशीले! क्या ऐसे मनुष्य जन्म की ही शास्त्रो मे दुर्लभता बताई है? जहाँ न आत्म-साधना है, न भगवान् की आराधना है, 'मैं कौन हूँ?' न इसका विवेक है, न धर्म-अधर्म का भी विचार है। क्या खाने के लिये, पीने के लिये, नीद लेने के लिये, भोगो का मजा लूटने के लिये और अन्त मे मरण प्राप्त करने के लिये ही हमारा अवतार हुआ है? क्या यही मानव जीवन का सार है? तो फिर हम मे और पशुओ मे क्या अन्तर है?

भद्रे! इसलिये मैंने मन मे निर्णय किया है कि जो आत्मा के लिए अच्छा है, शीघ्रता से उस अपने हित की साधना करूँ। वही पूर्ण मर्मज्ञ कहलाता है जो आग की लपटो द्वारा जलते हुए मकान से अविलम्ब सारभूत वस्तुओ को सर्वप्रथम बाहर निकाल लेता है और नि सार को छोड देता है। वैसे ही जन्म, मृत्यु, जरा, रोग, शोक आदि की दावाग्नि के द्वारा बुरी तरह जलते हुये ससार से जो शीघ्रातिशीघ्र अपनी आत्मा को निकालता है, वही सफल चेष्टा वाला ज्ञानियो का अग्रगण्य है। इसलिए मै पहले अपने सामर्थ्य को तोलकर समय आने पर ससार को भी छोड देना चाहता हूँ। यही मेरे औदासीन्य का कारण है और कुछ नही। यह कोई आश्चर्यजनक नही है

---

५. विज्ञे। ६ अग्रगामी। ७ समये।

यथाऽह् सुखं स्वलक्ष्यं साधयितुमर्हो भवेयम्। उपनत स्वर्ण-मयोऽयमवसरो मदर्थमद्यतन । 'यथासुखं पुत्र! मा प्रतिवन्धं कुरुष्व' इति वचसा वर्धापय माम्।"

जगज्जिहासो सूनो सात्त्विकी शारदा निशम्य जननी गद्गदहृदया जज्ञे । स्रवद्-वाष्पविन्दुधौत-कपोलपालि पुत्रमुरसा गाढमाश्लिष्य भग्नस्वरं जगाद—"नन्दन! दीक्षायै प्रस्थान-तत्परे त्वयि जात मे हृदय स्नेहशून्यम्, ज्योति-शून्य नेत्र-द्वयम्, ज्ञान-शून्य मस्तिष्कम्, शक्ति-शून्य च शरीरम्। उत सर्वमपि विष्टप शून्यतामाविभर्त्ति मदर्थ साम्प्रतम्।

पुत्र! धन्यधन्योऽसि त्व यदात्म-साधनायै उत्तिष्ठसे। सुख याहि-याहि स्वगन्तव्य पन्थानम्। साधय-साधय साध्यमनावाधम्। आराधय भक्त्या निजमाराध्यम्। यया सिहवृत्या महाव्रतानि वृणीषे तथैव तत्पालन-प्रसितो भवेरिति मे हार्दिकमाशीर्वचनम्।

सुजात! मम दुग्ध तदानीमेव धवलितं भावि यदा त्व चारित्रधवलिम्ना सतमस-निमग्न जगद् धवलयिष्यसि वालयिष्यसि च कुमार्गगामिनो जीवान् सुमार्ग प्रति। समाप्ति-सुन्दरा हि कृतिरारम्भ-सुन्दरा, नहि केवलमारम्भ-सुन्दरा सुन्दरा। विलोक्य-न्तेतमा वहवो जना प्रारम्भे रङ्गत्तरङ्ग-वीचिमालि-सध्रीचीनतामा-दधाना[1] परन्तु भवन्ति प्रान्ते पल्वल[2]-सकाशा निर्जीवना[3] दशामासेवमाना। अत पूर्ण वलावलमुत्तोल्य सुधीभि· पुर पादन्यासो विधातव्य।"

सुधामतिशयानामन्त्या मातु शिक्षामङ्गीकुर्वाणो भिक्षु धृतमुनि-वेषो गुरूपकण्ठमुपतस्थौ। महति जनसमूहे नमस्कार-महा-मन्त्र-

---

१ सध्रीचीनता-समानताम्। २ तुच्छतडागतुल्याम्। ३. निर्जीव-

अपना लक्ष्य साधने के लिए समर्थ होऊँ । आज मेरे लिए यह स्वर्णमय अवसर आ गया है । "पुत्र ! जिस प्रकार तुझे सुख प्राप्त हो, वैसा कर, प्रतिबन्ध मत कर", इस आशीर्वचन से मुझे बढावा दो ।

- ससार का परित्याग करने वाले पुत्र की सात्विक वाणी सुनकर माता गद्‌गद्-हृदय हो गई । आँसू बहाती हुई, पुत्र को छाती से गहरा भीचकर भग्न-स्वर से बोली—"नन्दन ! तुझे दीक्षा के लिये प्रस्थान तत्पर देखकर मेरा हृदय स्नेह-शून्य हो गया है, दोनो नेत्र ज्योतिर्विहीन हो गये है, मस्तिष्क चेतना-रहित हो गया है और शरीर शक्ति-शून्य निढाल हो गया है । अब मेरे लिए सारा ससार ही सूना है ।

पुत्र ! तू धन्य है कि आत्म-साधना के लिए खडा हो रहा है । सुख से अपने गन्तव्य स्थान पर जाओ । निर्विघ्न अपने साध्य को सिद्ध करो । भक्ति से अपने आराध्य की आराधना करो । जिस सिंह-वृत्ति से महाव्रतो को स्वीकार कर रहे हो वैसी ही तत्पर-वृत्ति से उनका पालन करना, यही मेरा हार्दिक आशीर्वाद है ।

सुपुत्र ! मेरा दूध उसी समय उज्ज्वल होगा जब तू गहरे अन्धकार मे निमग्न संसार को अपने उज्ज्वल चरित्र की धवलिमा से धवल करेगा और कुमार्गगामी जीवो को सुमार्ग पर लाएगा । परिणाम मे सुन्दर कार्य ही आरम्भ-सुन्दर होते है, केवल आरम्भ-सुन्दर, सुन्दर नही होते ! बहुधा देखा जाता है कि आरम्भ मे बहुत से लोग लहराते समुद्र के समान होते है । परन्तु अन्त मे छोटे 'तालाब के सदृश वे निर्जल दशा को धारण करने वाले हो जाते है, इसलिए अपनी शक्ति को पूरा तोलकर ही बुद्धिमानो को अपना कदम आगे बढाना चाहिए ।

अमृत से भी अधिक मिष्ट माँ की अन्तिम शिक्षा को आत्म-सात् करते हुए, मुनि का वेष धारण करके भिक्षु गुरु के चरणो मे उपस्थित हुए । महान्

---

नाम्-पक्षे नीरशून्याम् ।

पुरस्सरं सम्पन्न सर्वोऽपि सामायिकचारित्र-ग्रहणविधि, निर्व्यूढा लुञ्चनादि-क्रिया स्वयं गुरुणा।

संयममाद्रियमाणो भिक्षुर्भूरि-भद्रभावनया विभावितुं प्रवृत्त— "धन्योऽस्म्यहमद्य यत् सर्वारम्भ-परिग्रहान् परित्यज्य महामंत्रस्य पञ्चमपदमारूढवानस्मि। साम्प्रत मया परमोपयोगभाजा भाव्यम्। नहि सोढव्या संयमविराधनाहेतु सूक्ष्मापि स्खलना।

अधीते भिक्षुर्गुरुसमीपे सविनयं शास्त्रादि सावधानतया। नहि मनागपि प्रमाद्यति वृथाऽऽलस्य-निद्रा-विकथादि-वशंवद., यद् गुरुमुखाद् गृह्णाति तत् पठति, रटति च हीनाक्षरादि-दोष-विरहितम्। पठितमपि पुन परावर्त्तयतितरामस्खलितमनुदिनम्। परावर्त्तितमप्यनुप्रेक्षते स तात्पर्यार्थमात्मसात्कुर्वाण। अनुप्रेक्षितमपि निर्मलप्रतिभयाऽनेक-हेतु-दृष्टान्तै स्पष्टयति परेषा पुरत। भिक्षो. कुशाग्रीयामतिरति सूक्ष्मतत्त्वमपि तत् कालमुन्नयने, नयते चाध्या-पकानपि जातु संशयपदम्। प्रसह्य मातु स्तन्यं पेपीयमान-स्तर्णको[1] यथा बलवत्पुष्टिमावहति, मनोहृत्य[2] ज्ञानामृतं धयंस्तथा-ऽयमपि। नास्य गुरु-पठनमप्यभिमतौ परिणम-दजीर्णता दर्शयति, प्रत्युत विशालविद्याभरनम्रमपि तुलापल्लकमिव गौरवमाविर्भावयति। लघीयासो गरीयास सर्वेऽपि मुनय पुनराचार्या अप्येनं मन्वते, यदयमेव भाविपदाधिकारी भावीति भव्यभावभङ्ग्या सम्मान-यन्ति च।

स एष भिक्षु-कुञ्जरो भिक्षु, प्राय पञ्चवर्ष-दीक्षितोऽपि सुविलोडित[3]-समयसरस्वत्लब्ध-विवेक रत्न प्रत्नमुनिरिव[4] प्राप्त-विशिष्टानुभवोऽस्मान् परित्यक्तवन्दनान् प्रबोधयितुमनोभिर्गुरुभिरत्र

---

१ बछडा, इतिभाषा। २ आवृत्ति इत्यर्थ। ३, समयसरस्वत्लब्ध-

जन-समूह के वीच नमस्कार महामन्त्र के उच्चारण पूर्वक सारी दीक्षा-विधि सम्पन्न हुई। स्वय गुरु ने लु चन आदि क्रिया का निर्वाह किया।

सयम ग्रहण करने के वाद भिक्षु ने वहुत भव्य-भावना से यो चिन्तन किया—"आज मैं धन्य हूँ कि सव प्रकार के आरम्भ ओर परिग्रह का परित्याग कर महामन्त्र के पंचम पद पर आरूढ हो गया हूँ। अव मुझे परम उपयोग-वान् रहना चाहिए। सयम की विराधना करने वाली छोटी सी गलती भी नही सहनी चाहिए।"

भिक्षु गुरु के समीप सविनय शास्त्र आदिका सावधानता से अध्ययन करने लगे। आलस्य, निद्रा और विकथा आदि मे अपना थोडा भी समय वेमतलव नप्ट नही करते। जो गुरु के मुँह से ग्रहण करते उसे ही हीनाक्षर-अत्याक्षर आदि दोपो से मुक्त पढते और रटते। सीखे हुए का प्रतिदिन अस्खलित परिवर्तन करते समय उमका तात्पर्यार्थ आत्मसात् करते हुए उसकी अनुप्रेक्षा करते और अनुप्रेक्षित को भी अपनी निर्मल प्रतिभा से अनेक हेतु दृष्टान्तो के द्वारा दूसरो के आगे स्पष्ट करते। भिक्षु की कुशाग्रवुद्धि सूक्ष्म तत्त्व को भी तत्काल ग्रहण कर लेती है और अध्यापको को भी आश्चर्यचकित कर देती। जैसे माँ का पेट भर दूध पीने वाला वछडा खूव परिपुष्ट हो जाता है वैसे ही ये भी ज्ञानामृत का मनचाहा पान करते हुए विद्वान् वन गए। इनका भारी पठन भी अहंकार मे परिणत न होकर जीर्ण (हजम) हो जाता था। विशाल विद्या के भार से नम्र होते हुए भी तराजू के पलडे की तरह गौरव ही व्यक्त करता था। छोटे-वडे सभी साधु और आचार्य भी 'यही भावी पदाधिकारी होगा' यह मानते थे और भव्य-भाव-भगिमा से इनका सम्मान करते थे।

वही भिक्षुओ मे कुंजर के समान यह भिक्षु, जिसने दीक्षा लेने के वाद पॉच वर्ष मे ही गहन शास्त्र-समुद्र को मथ डाला और विवेक रत्न को पा लिया, स्थविर मुनि की तरह यह विशिष्ट अनुभवशाली, हमे, जिन्होने कि

---

सिद्धान्त-समुद्रलब्ध०। ४. पुराणमुनिरिव।

प्रेषितश्चतुर्मासीमधिवस्तुमागच्छति। येषा केषाञ्चन हृदये या· विचिकित्सा वरीवृत्यन्ते ताः सर्वा शास्त्रानुसारिणा समाधानेन समाधातव्या शास्त्रबोधविशारदैं श्राद्धैं। ननरामीदृशोऽनुत्तरोऽवसरो राजनगर-नागरिकैरवापि प्राक्तनेकाले, एष्यत्यपि कदा प्राप्स्यतीति सर्वज्ञा एव विदन्ति। अतो वार्त्तमानिकवेलाया आननोपनत-कवलवदविलम्बं लाभ सुग्राह्योऽस्माभि।"

इत्थं व्यक्तीकृतवर्णन श्रीदेपेयपदार्पणमाकर्ण्य सर्वेऽपि पौरा निर्धन निधिमासादयन्न इवोत्कृष्टसम्मदमापु। केचिद् व्याख्यान-रसिका, केचिच्छास्त्रश्रोतार, अपरे तत्त्वचर्चाचणा., इतरे क्रिया-काण्डपण्डिताः, परे च तपस्यातत्परा, समेपि स्व-स्वकृते स्वर्णमयं समय कल्पयन्त पर्जन्य-सन्निभा[1] भिक्षोरागति हृदा श्लाघयामासु।

इति श्री चन्दनमुनि-विरचितेऽभिनिष्क्रमणाख्ये महाकाव्ये
गद्यप्रबन्धे षष्ठः समुच्छ्वास.

१ मेघतुल्याम्।

वदना-व्यवहार को छोड दिया है, समझाने के लिए गुरु ने भेजा है। यह चतुर्मास करने के लिए यहाँ आ रहे है। जिन किन्ही के हृदयमे जो कोई शंकाए हो वे सव शास्त्र वोध विशारद श्रावको को शास्त्र-सम्मत समाधान से समाहित कर लेनी चाहिए। ऐसा उत्तम अवसर राजनगर के श्रावको ने पहले कभी नही पाया है। भविष्य मे भी वापिस कब मिलेगा—इसे सर्वज्ञ ही जानते है। इसलिए वर्तमान का हमे, मुँह मे आये हुए ग्रास की तरह अविलम्व लाभ उठा लेना चाहिए। इस प्रकार के वर्णन से श्री भिक्षु का पदार्पण सुनकर नगर के लोगो ने, निर्धन के निधि पाने के समान परम उल्लास पाया। कुछ व्याख्यान रसिक, कुछ शास्त्र श्रोता, कुछ तत्त्वचर्चा मे चतुर, कुछ क्रियाकाण्ड मे पटु, कुछ तपस्या तत्पर सबने ही अपने-अपने लिए इसे स्वर्णिम -अवसर मानते हुए मेघ के समान इनके आगमन का हृदय से स्वागत किया।

छठा समुच्छ्वास समाप्त



मिति प्रस्थानकथा जिज्ञासाञ्चक्रिरे। विक्रान्त[1] गोर्यादिगुणा इवैते भिक्षुमनुगच्छन्त सोपयोग [2]राजनगर-काष्ठामालम्बिरे।

अध्युवास भिक्षू राजनगर-मध्यस्थमुपाश्रयम्, निर्व्यूढञ्च नमस्कार-महामन्त्रपूर्वकं मङ्गलाचरणविधि। निवृत्तिमाप्ते गोचर्यादिकृत्ये भोजनानन्तर कतिपये विज्ञा श्रावका हृच्छङ्का व्यपनेतुमिच्छव उपभिक्षु समागतवन्तः। 'किमपि जिज्ञासव एते' इति इति जानानेन भिक्षुणा प्रागेव दाक्षिण्येन प्रष्टुमारब्धम्—"भो भो भव्या श्रवणोपासका! पापभीरवो भवन्तो भूरिगो भाग्यभाजो मुनीन् भक्त्या समुपासितवन्त। आस्तिक्येन तदुपास्तिमास्तिघ्नुवानास्तात्विक-चर्चया चर्चितमन्तकरण विरचितवन्तः। कल्प्याऽकल्प्य-विविक्त्या साधुत्व-परीक्षाक्षमा भूतवन्त। न विदन्ति यावदर्वाचीना प्राचीना अपि मन्दमेधसो मुनयस्तावद् युष्माभि सुविदित समय-रहस्यम्। द्रव्य - क्षेत्र - काल-भावादीना या तात्कालिकी छाया साऽऽकालिकीव[3] सर्वत्र पदार्थजाते पतन्ती किमप्यावश्यकीय परिवर्तनमर्हतीति सर्वविदितमेतत्। तथाप्यतितुच्छस्खलना-प्रच्छादना[4]ऽन्तर्हितहृदयैर्भवद्भि भूतमित्यद्भुतम्। परम हितैषिणो वृण्वन्ति श्रावकास्तु महत्तत मातापित्रोरुपमानम्। इतरे पुरोभागिनस्तु[5] सपत्न्युपमानमपि। चित्रित जायते मे मानसं निध्यायत् त्रि[6]कृत्व शून्यं युष्मद् वन्दना-व्यवहारम्। किमपि कुर्वन्तुतमा वा भवन्तो भावितात्मना मुनीना किम्? परन्तु व्यवहृति-परित्यागो नहि विवेकवता लक्षणम्। केन लक्ष्यते कस्य हृदये किमनवद्यमवद्यं वा विलसति। व्यवहारविगदेन कार्यकलापेनैव मनुष्योऽङ्कयति सुन्दरासुन्दररेखा परहृदये। हन्त! केवलिनोऽपि नहि व्यवहारमुदासते किमस्मादृशामल्पज्ञाना

१ वीरम्। २ राजनगरदिशाम्। ३. विद्युदिव। ४ प्रच्छादनं

आदि गुणो की तरह ये लोग भिक्षु के अनुगत चलते हुए राजनगर की सीमा मे प्रविष्ट हुए।

राजनगर के मध्य जो उपाश्रय था, उसमे श्रमण भिक्षु ठहरे। नमस्कार महामन्त्रका उच्चारण कर मंगलाचरण रूप से संक्षिप्त वक्तव्य दिया। गौचरी आदि कार्य सम्पन्न होने पर भोजन के वाद कुछ विज्ञ श्रावक अपने हृदय की शंका मिटाने के लिए मुनि भिक्षु की सेवा मे उपस्थित हुए। 'ये कुछ जिज्ञासा लेकर आए है" यह जानते हुए भी भिक्षु ने चतुराई पूर्वक पहले ही पूछ लिया—"ओ! भव्यो! आप पापभीरु श्रमणोपासक है। आप लोगो ने वहुत से सौभाग्यशाली मुनियो की भक्ति से समुपासना की है, आस्तिकता से उनकी सेवा करते हुए तात्विक चर्चा से अपने अन्त करण को भावित किया है। कल्प्य और अकल्प्य के विवेक (ज्ञान) से साधुत्व की परीक्षा करने मे पूर्ण सक्षम हो गये है। जितना आगम-रहस्य नए मुनि और अल्प-वुद्धि वाले वहुत पुराने मुनि भी नही जानते उतना तुम लोगो ने जान लिया है। द्रव्य, क्षेत्र, काल और भाव आदि की जो तात्कालिक छाया है वह विजली की तरह सव पदार्थ समूह पर गिरती हुई कोई आवश्यक परिवर्तन चाहती है यह सर्व-विदित है। ऐसा होते हुए भी छोटी-छोटी गलतियो के पर्दो ने आप लोगो का हृदय ढक लिया यह अद्भुत वात है। परम हितैषी श्रावक तो माता-पिता की महान् उपमा पाते है। दूसरे केवल दोष-दर्शी श्रावक तो सौत के समान गिने जाते है। तिक्खुत्ते के पाठ के विना तुम लोगो का वन्दना-व्यवहार देखकर मेरा मन आश्चर्य से चकित रह गया। ऐसे आप कुछ भी करे, भावितात्मा मुनियो को क्या अडचन है? परन्तु व्यवहार को भी नही निभाना विवेक-शालियो का लक्षण नही होता। कौन जान सकता है किसके हृदय मे क्या उचित या अनुचित है? व्यवहार से परिष्कृत कार्य-कलाप से ही मनुष्य दूसरो के हृदय मे सुन्दरता या असुन्दरता की रेखा अंकित करता है। देखो! केवलज्ञानी भगवान भी

---

आवरणम्। ५ दोषैकदृग् पुरोभागी—इति हैम। ६. 'तिक्खुत्ता के विना इतिभाषा।

## सप्तमः समुच्छ्वासः

त्वर्यतां भोस्त्वर्यतामद्यैव प्रातरायान्तितरामत्र ते महनीयवृत्ता मुनयः। सर्वेषां हृदये काचिन्नव्या क्रान्तिः समुत्क्रान्ता। अभिगन्तुमुत्काः सर्वेऽपि तदर्हां सज्जां विदधिरे। अहंपूर्विकया पुरतो गन्तुं कृतोत्तालां बाला स्वसज्जायै जननी-जनकान् त्वरयाञ्चक्रिरे। नानानयनाभिरामाभिर्लसदाकल्यालङ्कृतिभिरलङ्कृता[1] बालानामवलिर्धावमानाऽग्रगामिनी जज्ञे। श्रद्धाप्रतिकृतय इवाऽऽर्या नार्यो विचित्रपरिधानानि बिभ्रत्यश्चतुर्विंशति-स्तुतिमयानि मङ्गलगीतानि गायन्त्यः सभूय भिक्षोः सम्मुखीनमध्वानमासिषेविरे। इतः सुरचितोष्णीषशोभितमस्तिष्का उत्तरासङ्गार्थमुभयतो लम्बायमानग्रीवाश्रितवसना परिहित-शुचिवाससः, साधुपरिवेष्टित-कटिपटा अशठाः श्रावका सोत्साहं भिक्षुमभिनन्दितुं सामुख्यमाभेजिरे।

अन्ते दृष्टिविषयमागते भिक्षुप्रभृतिमुनिपञ्चके सर्वेऽपि रोमाञ्चकञ्चुकिताः सत्वररचितोत्तरासङ्गाः श्राद्धाः, करस्थ-कर्पटं मुखे कुर्वाणा भूरिशो बाला स्त्रियश्च सविधि-सहर्षमेनं ववन्दिरे, सुखमपि च पप्रच्छुः। परन्तु राजमल-व्रजलालाद्याः केचिच्छ्रमणोपासकाः करौ किञ्चित् कुड्मलीकुर्वाणा ऊर्ध्वंदमा एव व्यवहार-वन्दनां विदधिरे, सह सुख-पृच्छया च कदा, कुतः, कथ-

---

१ लसद्वेषालङ्कारैः।



## सातवा समुच्छ्वास

जल्दी करो भई, जल्दी करो, आज ही प्रात' वे महामहिम मुनि आ रहे है। सबके हृदय मे कोई नई क्रान्ति-सी मच गई। सम्मुख जाने के लिए सबने ही उसके योग्य तैयारी की। "मैं सबसे पहले आगे जाऊँगा।" इस प्रकार की उतावल करतेहुए बच्चो ने अपनी सज्जा के लिए माता-पिता को शीघ्र ही व्यस्त बना दिया। आँखो के लुभाने वाले वसनो और आभूषणो से आभूषित बालको की पक्ति दौडती हुई सबसे आगे निकल गई। विचित्र प्रकार के परिधान धारण करके श्रद्धा की प्रतिछाया-सी आर्य-नारियाँ मिलकर चौबीस तीर्थङ्करो का स्तुतिमय मगल गीत गाती हुई भिक्षु के सामने आई। इधर सुघड़ता मे बाँधी हुई पगडियो मे शोभित मस्तक वाले शुद्ध कपडे पहने हुए उत्तरासग के लिए ग्रीवा पर दोनो ओर चादर लटकाए हुए, कटि को भली भाँति परिवेष्टित किए हुए सरल भद्र श्रावक भिक्षु का अभिनन्दन करने के लिए सम्मुख आए।

अन्त मे जब आते हुए भिक्षु आदि पाँचो मुनि दृष्टिगोचर हुए, तब सबने हर्ष से रोमाचित होकर उत्तरासग किया। रुमाल को मुह पर लगाकर बच्चो और महिलाओ ने सहर्ष विधि-पूर्वक इनको वन्दना की और सुख-पृच्छा की, पर राजमलजी, व्रजलालजी आदि श्रावको ने थोडे हाथ जोडकर खडे-खडे ही व्यावहारिक वन्दना की और सुख-पृच्छा की। कब विहार किया? कहाँ से किया? इधर पधारना कैसे हुआ? आदि जिज्ञासा की। वीर के पीछे शौर्य

गणना ! नहि सर्वत्राप्येवंभूतनय-पक्ष. कक्षीकरणार्ह । यद्यपि जानीमो वयं स एव पक्ष याथार्थ्येन वास्तविक', शुद्ध', समुपास्यश्च, तेनैवान्ते निश्चित कल्याणम् , तथापि यत्रास्मदीया स्थितिस्तत्रस्थो व्यवहार समुपबृहणीय एव । अत एव स्वयभुवा[1] निश्चय-व्यवहारभासुरा नयोभयी भव्याना कृते पुरस्कृता । भवद्भिस्तु सूक्ष्मा [2]द्वापररेखामाश्रयद्भिवन्दनाद्या विधय परित्यक्तास्तत् कियदौचित्यमञ्चतीति स्वत एव चारु-विचारधारया चिन्तनीयम् । किमहं वहु व्यनज्मि भवन्तस्तु वहुविन्दव[3] सन्त्येव ।"

उत्तराणा पृष्ठभूमिमिव भिक्षोश्चातुर्य-चमत्कृना वाचं कर्णे कृत्वा समयज्ञा' श्रावका हर्ष-खेदमिश्र प्रत्यूचिरे—"मुनिपुङ्गव ! स्फटिकवन्निर्मला यौष्माकीणा मेधा, सुधा-तुल्या युष्मदीया सरस्वती, कर्पूरायते भावत्की कीर्त्ति', गङ्गोदकीयति च भवदीय चारित्रम् । भवानिव भवान् नात्र सन्देह, परन्तु कथनमिव करणम्, करणमिव च कथनं यावन्नहि पोस्फुरीति तावत्कथ श्राद्धाना श्रद्धा सुस्थिरा स्यात् ? वेपभूपाया हि चेत् साधुत्व-कल्पन तर्हि न किं वहुरूपिणोऽपि साधव. ?

किञ्च—अनग्नि दावानलम्, अनीर सागरम्, अनिगडं च कारागृह संसार मत्वा युष्माभि साधुत्वमङ्गीकृतम् । समास्वादित-श्चेत् परिणामसरस· साधुत्वरस , कि तर्हि साक्षाल्लक्ष्या पक्ष्म-लाक्ष्या[4], दीव्येन स्वर्णरत्नराशिना वा ? स्फुरदानन्दामोदमय-सयम-मलयज-शीतलीभूताना कि क्षणिकशीतलेन हरिचन्दनेन, किमिन्दुना वा नित्यपरिवर्तनशीलेन ? सुदुर्वह पञ्चमहाव्रतभारं वहमानान् मुनीन् दृष्ट्वा मादृशा· पञ्चरत्नसानूत्तोलनमनुस्मरन्ति"

---

१ भगवता । २ सन्देहरेखाम् । ३ बहुविज्ञा. । ४. सुन्दरस्त्रिया ।

व्यवहार की अवज्ञा नही करते, हम जैसे अल्पज्ञो की तो गिनती ही क्या है ? सब जगह ही एवभूत नय का पक्ष स्वीकार योग्य नही होता। यद्यपि हम जानते है कि वही पक्ष यथार्थतया वास्तविक शुद्ध और आदरणीय है, अन्त मे निश्चित उमसे ही कल्याण होता है, फिर भी जहाँ हम लोग रहते है वहाँ का व्यवहार निभाना भी बहुत जरूरी है। इसलिए सर्वज्ञो ने निश्चय और व्यवहार दो नयो की प्ररूपणा की है। आप लोगो ने छोटे से सन्देह के कारण ही जो वन्दनादि विधि का परित्याग कर दिया वह कहाँ तक उचित है। आप स्वय इसका चिन्तन करे, मैं ज्यादा क्या कहूँ। आप लोग तो स्वय जानकार है।"

उत्तरो की पृष्ठ-भूमि के समान भिक्षु की चातुर्य-गर्भित वाणी सुनकर समयज्ञ श्रावको ने हर्ष और खेद की मिश्रित अनुभूति करते हुए कहा— "मुनि-पुङ्गव ! आपकी मेवा (बुद्धि) स्फटिक के समान निर्मल है, सुधामयी आपकी वाणी है। कर्पूर के समान उज्ज्वल आपकी कीर्ति है। गंगा के सलिल के सदृश स्वच्छ आपका चरित्र है। आप आपके ही समान हैं इसमे कोई सन्देह नहीं, परन्तु कथन के अनुरूप क्रिया और क्रिया के अनुरूप कथन जब तक नही होता तब तक श्रद्धालुओ की श्रद्धा सुस्थिर कैसे हो ? वेश-भूषा से ही अगर साधुत्व की परिकल्पना की जाए तो बहुरूपियो को भी साधु क्यो नही मान लिया जाए ?

आप लोगो ने संसार को बिना अग्नि का दावानल, बिना पानी का समुद्र और बिना हथकडी-बेडियो का कारागृह मानकर साधुत्व अगीकार किया है। निष्पत्ति मे जो सरस है उस साधुत्व-रस का अगर अच्छी तरह स्वाद ले लिया तो साक्षात् लक्ष्मी के समान स्त्री का और दिव्य स्वर्ण रत्न-राशि का भी क्या मोल है ? स्फूर्त होते हुए आनन्द की सौरभ से सुरभित सयम रूप चन्दन से जो शीतल बन गये है, उनके लिए क्षणिक शीतल हरिचन्दन का और नित्य परिवर्तनशील चन्द्रमा की शीतलता का भी क्या मूल्य है ?

दूर्वह पंच महाव्रतो का भार वहन करने वाले मुनियो को देखकर हमारे जैसो का हृदय तो पाँच सुमेरु पर्वतो को उठाने के समान मानकर काँप उठता

५ पञ्चमेरूत्तोलनम्।

कम्पमानान्तःकरणा। चित्रम्!! किमयं सुखमयः पन्था उत कण्टकमयः! विषभक्षणम् वा पीयूषपानम्।

अहो! विशुद्धः साधोरेकोऽपि क्षणोऽनिरिणक्ति[1] गृहस्थानामाजीवनमाचरितं सुचरितम्। नितान्तवैराग्यरसपानैकतान: सुसाधुस्तुच्छीकुर्यादतुच्छाभ्रच्छायोपमितानि भौतिक-सुखानि।

ऐदंयुगीनैर्युष्माभिः[2] किमीदृशं साधुत्वं प्रतिपाल्यतेतराम्? वयं यद् युष्मान् निजमुत्तमाङ्गं[3] भूमौ सलीयं प्रणमामस्तत् किं केवलं वेषाय! यद् युष्माभिः सार्वभौमानि सार्वत्रिकाणि करण-योगविशुद्धानि पञ्चमहाव्रतानि स्वीकृत्य चेच्छैथिल्यं सेव्यते, कैतवं तन्यते, अनाचीर्णमाचर्यते, अनेषणीयं च भुज्यते, तदा वयं कान् वन्दामहे? कान् कल्याण-मङ्गलमयाश्च मन्वानाः पर्युपास्महे?

मुनिवर! अहरहो जायमाना दोषाः किमु न भवद्धिषणा-मान्दोलयति विचारचञ्चुराम्! यथा—'न विद्यतेऽगारं गृहं यस्य सोऽनगारः' इति शास्त्रविहितं नामधेयम्। साम्प्रतं भवद्भिः प्रतिग्रामं स्थानकानि स्थाप्यन्ते, तदर्थं प्रसह्य गृहस्थाः प्रेर्यन्ते, दातारः ससम्मानं स्तूयन्ते, अदायकाः सगर्हं निन्द्यन्ते, निम्नया च दृशा विलोक्यन्ते। किं युष्माभिरेतदर्थं हि मुनित्वमादृतम्? यदेकं जीर्णं शीर्णं सामान्यं विशालं वा भवनं परिहाय नगरे-नगरे नानासुविधादायीनि लयनानि निर्माप्यन्ते, स्थाप्यन्ते च तत्र वस्त्र-पात्र-पुस्तकादीनि स्व-स्व-रूपेण। उपाश्रयेष्वपि 'अयमस्य सम्प्रदायस्योपाश्रयः' इति गाढं ममत्वमाविर्भाव्यते। न तत्रान्य-सम्प्रदायगत-साधुभिः स्थितिः सुकरा। हन्त! कलहायन्ते व्रतिन-स्तदधिकृत्य प्रतिद्वन्द्विन इव परस्परम्।

---

१ अतिशेते। २ इदानीन्तनैः। ३ मस्तकम्।

है। आश्चर्य होता है कि यह मार्ग सुखमय है अथवा कण्टकमय ? विषपान है या अमृतपान ?

अहो ! साधु का विशुद्ध एक क्षण भी, गृहस्थ की आजीवन साधना से विशिष्ट होता है। निरन्तर वैराग्य-रस मे तल्लीन महामुनि वादलो की छाया के तुल्य भौतिक सुखो को नगण्य मानता है।

वर्तमान के साधु, क्या इस प्रकार का साधुत्व पालते है ? हम लोग जो आपको अपना सबसे उत्तम अग शिर भूमि पर टिका कर वन्दना करते है वह क्या केवल वेष को करते है ? जो आप लोगो ने करण-योग की विशुद्धि के साथ सार्वत्रिक एव सार्वभौम पाँच महाव्रतो को स्वीकार किया है, फिर भी अगर आचार मे शिथिलता रखते है, छल-कपट करते है, अनाचार का सेवन करते है और अनेषणीय (अशुद्ध) आहार-पानी का भोग करते है तो हम किसको वन्दना करे और किसको कल्याणकारी तथा मंगलमय मानकर पर्युपासना (सेवा) करें ?

मुनिवर ! निरन्तर होने वाले दोष क्या आपकी चिन्तनशील वुद्धि को आन्दोलित नही करते ? जैसे कि—जिसके अगार अर्थात् गृह नही है उसे 'अनगार' कहा जाता है, यह शास्त्र-विदित नाम है। अब आप लोग प्रत्येक ग्राम मे स्थानक स्थापित करने लगे है, उनके निर्माण के लिए गृहस्थो को बल-पूर्वक प्रेरणा देते है और अर्थ-दाताओ की सम्मान-पूर्वक स्तवना करते हैं तथा नही देने वालो की गर्हा-पूर्वक निन्दा करते है और उन्हे निम्न दृष्टि से देखते है। क्या आप लोगो ने इसीलिए साधुचर्या ग्रहण की है ? एक जीर्ण-शीर्ण साधारण अथवा विशाल भवन का परित्याग करके नगर-नगर मे नाना सुविधा-जनक स्थानक (मकान) वनवाने लगे है और उनमे अपने-अपने नाम से वस्त्र-पात्र और पुस्तक आदि सामान रखने लगे है। स्थानको मे भी 'यह अमुक सम्प्रदाय का स्थानक' यो प्रगाढ ममत्व को प्रकट करते है। वहाँ दूसरे सम्प्रदाय के साधु साधारणतया नही ठहर सकते। आश्चर्य है ! प्रतिद्वन्द्वियो की तरह साधु लोग उनके लिए परस्पर कलह करते हैं।

चिन्त्यम्—यच्छास्त्रे 'श्मशाने शून्यागारे वृक्षमूलेऽप्येकदा निवसति मुनि' क्व भवादृशां कृते परःसहस्राणि रूप्यकाणि-व्ययीकृत्य मनोरमा उपाश्रया विधीयन्ते, अयमेव जैनर्षीणां किमनवद्या पद्या[1]। एकस्या इष्टिकायाश्चयेपि षण्णामपि जीव-निकायानां निश्चित विनाशस्तदा बृहतो निलयान् निर्मापयिषूणां युष्माकं कथमिव त्रिकोटि-विशुद्धं महाव्रतपञ्चकं स्थैर्यमालम्बते ! न वाच्यम्, प्रथमे महाव्रते ह्यायाति सूक्ष्मा क्षतिरिति। भग्ने खल्वेकस्मिन् महाव्रते भवन्ति मुनीश्वराणां पञ्चापि महाव्रतानि भग्नानि। यतोऽस्ति गृहस्थानां धर्मः स्वर्ण-तुल्यम्, यच्छकलितमपि श्रयति यथार्हं मूल्यम्, परन्तु मुनीनां महाव्रतपञ्चकं तु विलसति व्यपगतमलमखण्ड-मौक्तिकं सब्रह्मचारि। यत्र कुत्रापि किञ्चित् खण्डीभूतं चेद् गतगतं तस्याऽर्घ्यमर्घम्[2]। हिंसां विदधानास्तदनङ्गी-कारे मिथ्यावाग्दोषः स्वयमवकाशं लभते। हिंस्यमानजीवानां नास्ति सूक्ष्माप्यनुमतिः स्वप्राणग्रहणाय, ततोऽदत्तादानापराधोऽपि निर्बाधः स्यात्। दुःशील-प्रवृत्तित्वा-च्चतुर्थमपि नास्ते यथार्थम्। परिग्रहेण विना तु न स्थितिमश्नुते किमपि, ततोऽपरिग्रह-व्रतमपि भग्नमेव। एवमेकस्यैवोपाश्रयस्य निर्माणोपदेशेऽनेके दोषाः स्वयमुद्भावितास्युस्तदा कथं युष्माभिर्वयं पञ्चमहाव्रतवन्त, इति प्रकटनसाहसमाधीयते मुधैव।

पुनस्तत्रोपाश्रये नैजान्युपकरणानि वस्त्रपात्रपुस्तकादीनि संस्थाप्य यत्र कुत्रापि विह्रियते तदा 'उभओकालं भंडोवगरणस्स अप्प-डिलेहणाए' इत्यादि शास्त्रीय-शासनं कथं सम्यक् परिपालितं भवेत्। एकमप्युपकरणं यदि जानानो मुनिर्न प्रतिलिखति यथा-विहितम्, तदा लभते स निश्चितं लघुमासिकं प्रायश्चित्तमिति

---

१. मार्ग २ मूल्यम्।

जरा सोचे कि शास्त्रो मे श्मशान, सूने मकान और वृक्षो की छाया मे भी मुनियो के रहने का उल्लेख मिलता है और कहाँ आप लोगो के लिए हजारो-हजारो रुपये खर्च करके सुन्दर उपाश्रय बनाये जाते है। क्या यही जैन मुनियो का शुद्ध आचार है ? एक ईंट के निर्माण मे जब छह ही प्रकार के जीवो की घात होती है, तब बडे बडे भवन निर्माण की इच्छा रखने वाले आप लोगो के पाँच महाव्रत कैसे तीनकोटि से विशुद्ध रह सकते है ? आप यह मत कह देना कि प्रथम महाव्रत मे ही थोडी क्षति आती है, परन्तु एक महाव्रत खण्डित होने पर मुनियो के पाँचो ही महाव्रत खण्डित हो जाते है, क्योकि गृहस्थो का धर्म तो स्वर्ण-तुल्य है जो खण्डित होने पर भी अपना योग्य मूल्य पा जाता है, परन्तु साधुओ के पाँच महाव्रत तो निर्मल अखण्ड मोती के समान है। यदि वे कही से थोडे भी खण्डित हो जाएँ तो उनका मूल्य कुछ भी नही रहता। हिंसा करने वालो को, उसकी अस्वीकृति मे असत्य वचन का दोष स्वय ही आ जाता है। जिनकी हिंसा की जा रही है उन प्राणियो की अपने प्राण देने के लिए बिल्कुल भी अनुमति नही है, इसलिए अदत्तादान का अपराध भी निर्बाध हो जाता है। दु शील प्रवृत्ति के कारण चतुर्थ महाव्रत भी यथार्थ नही रह पाता। परिग्रह के बिना तो कुछ टिक भी नही सकता, इसलिए अपरिग्रह महाव्रत भी भग्न होजाता है। इस प्रकार एक ही उपाश्रय-निर्माण के उपदेश मे अनेक दोष स्वय पैदा हो जाते है, तब आप लोग यह कहने का कैसे साहस कर सकते है कि हम पंच-महाव्रतो के पालक है ? उस उपाश्रय मे वस्त्र, पात्र और पुस्तक आदि अपने उपकरण सुरक्षित रखकर जहाँ कही विहार कर जाते है तब 'दोनो समय भण्डोपकरण की प्रतिलेखना न की हो' इत्यादि जो शास्त्रीय अनुशासन है, उसका सम्यक् प्रतिपालन कैसे हो सकता है ? जानता हुआ मुनि यदि विधिपूर्वक एक उपकरण की भी प्रतिलेखना न करे तो वह निश्चित लघुमासिक प्रायश्चित्त पाता है, यह निशीथ सूत्र की प्ररूपणा

निशीथसूत्र-व्याख्यानम्। अनेकान् मासान् व्यतीत्य स्वोपाश्रये पुनरागताना भवतां नूनमनेक-सूक्ष्मजन्तुजात-परिव्याप्तानि धूलि-धूसराण्युपकरणानि पुन प्रतिलिखता कथमिव चारित्राराधना समाचारीसाधना चाऽक्षुण्णा परिस्फुरति ?

मुनिवर! राज्ञा देवाना च यथा प्रासाद., हर्म्यं यथा धनिनाम्, व्रतिना छात्राणा च मठ, उटजो यथाऽकिञ्चनानाम्, विहारो यथा बौद्धानाम्, आश्रमो यथा तापसानाम् तथैवोपाश्रयो भवताम्। अस्ति केवलं नाम्ना भेद, न वास्तविकोऽर्थभेद। उपाश्रयसेवित्वादेव जातं वस्त्र-पात्रपुस्तकादीना मर्यादोल्लङ्घनम्। अनावश्यकं यदुपकरणं तत् कपाटादौ सगृह्य तत्र तालक दत्त्वा तालिकापि स्वपार्श्वे वा स्वप्रत्ययिते स्थले कुत्रापि स्थाप्यते। हहा!! दु पमारेण कीदृशी कृता महाव्रतिना विडम्बना।

पुन. कृतशिथिलाचारपोपा आधाकर्मिकोद्द शिकादिदोपा प्राय. सेव्यन्त एव। भगवद्भिराचाराङ्गे स्पष्टमुद्भावित यथाऽऽधा-कर्मिकौद्द शिकादिदोपदुष्टमुपाश्रयमुपभुञ्जन् मुनिर्द्विपक्षं कर्म सेवते। यथा-द्रव्यतो मुनिवेपभृन्मुन्याभास, परन्तु भावतो गृहस्थ एवेति। तद्वत् क्रीतकृतदोपोऽपि स्थानौषध-पात्र-पुस्तकादि-हेतवे लगत्येवा ऽधुनातनाना मुनीना बहुधा। यद् युज्यते तदेवान्धश्रद्धालवो गृहिणो यथाकथमपि पूरयितु चेष्टन्ते ध्रुवमवगणय्य भगवदनुयोगम्। अलमितरकथया, यच्छिष्या अपि बहुशः क्रीतकृता एव संभवन्ति गुरुवर्याणाम्। हन्त! प्रलोभ्य मातापितॄन् बोधशून्यानि तदपत्यानि क्रीत्वा गुरवे प्राभृतीकुर्वन्ति तीर्थकृन्नामगोत्रपुण्य-प्रकृतिं संचेतु-मिच्छवो बोध-तपस्विनो[1] धनिन।

---

१. बोधेन दुर्बला· अल्पज्ञा इत्यर्थ।

है । अनेक महीने दूसरी जगह विताकर वापिस उपाश्रय मे आने पर अनेक सूक्ष्म जन्तुओ से परिव्याप्त और धूल से भरे हुए उपकरणो को पुन: प्रतिलेखना करते हुए आप लोगो की चारित्र-आराधना और समाचारी-साधना कैसे निर्दोष रह पाती है ?

महामुने ! जैसे राजाओ और देवताओ के प्रासाद, धनिको की हवेलियाँ, सन्यासियो के मठ, छात्रो के छात्रावास, गरीबो के झोपडे, बौद्धो के विहार, तापसो के आश्रम—वैसे ही आपके उपाश्रय (स्थानक) है। केवल नाम का भेद है। वास्तव मे कोई अर्थ-भेद नही है। उपाश्रय होने के कारण ही वस्तु, पात्र और पुस्तक आदि की मर्यादा का उल्लघन हो जाता है। जो अनावश्यक उपकरण होते हैं उन्हे आलमारियो मे बन्द कर ताला लगाकर चाबी भी अपने पास या अपने विश्वस्त स्थान मे कही रखी जाती है। कितने खेद की बात है कि इस दु पम काल ने महाव्रतियो की कैसी विडम्बना की है। शिथिल आचार का पोषण करते हुए मुनिजन आधाकर्मी और औद्देशिक आदि दोषो का सेवन तो प्राय करते ही है। आचाराङ्ग सूत्र मे भगवान् ने स्पष्ट कहा है—'आधाकर्मी-औद्देशिक दोष से दूषित उपाश्रय का उपयोग करता हुआ मुनि द्विपक्ष-कर्म का सेवन करता है।' अर्थात्—वह द्रव्य से मुनि का वेष धारण करने के कारण मुनि का आभास-मात्र है, परन्तु भाव से गृहस्थ तुल्य ही है। उसी प्रकार बहुधा आधुनिक मुनियो के स्थान, औषध, पात्र और पुस्तक आदि को लेकर 'क्रीतकृत' दोष भी लगता ही है। जो कुछ चाहिए उसकी पूर्ति करने के लिए भगवान् के अनुशासन की अवगणना करतेहुए अन्ध-भक्त जैसे-तैसे चेष्टा करते है। दूसरी बातो का क्या कहना, शिष्य भी प्राय खरीदे हुए ही होते है। तीर्थङ्कर-नाम, गोत्र-प्रकृति को सचित करने के इच्छुक धनवान श्रावक गरीब माता-पिताओ को प्रलोभन देकर उनके बोध-शून्य बच्चे-बच्चियो को खरीदकर आपको भेंट करते हैं।

मुनि-पुङ्गव! नीरसा भवतितरामस्माकं रसना युष्माकमन्त-स्थितिमाविर्भावयन्ती। वहुश्रुता यूयं कि वहुव्याकुर्वन्ति मादृशा अल्पमेधसः! [1]स्वयमभ्यूह्यमैदम्पर्यपारीणै[2] श्रीमद्भि।

इति श्री चन्दनमुनि-विरचितेऽभिनिष्क्रमणाख्ये महाकाव्ये गद्यप्रवन्धे सप्तमः समुच्छ्वासः ॥

---

१. स्वयं तर्कणीयम्। २ तात्पर्यविद्भिः।

## अष्टमः समुच्छ्वासः ★

अप्रियामपि मातुर्तर्जनामिव हिता, कटुकामपि किरातकवत् तापापहा, शल्यचिकित्सामिवान्तारोगप्रोज्जासनी हितेच्छुश्रावकोदिता गिर निशम्य सुलब्धहार्दोऽपि दैपेय स्वगुरु-गौरव स्फीतिमानयन् सव्याजं व्याजहार—"अये ? अस्थिमज्जाप्रेमानुरागरक्ता भक्ता श्रावका ! सुष्ठु साधूनामुपरि कटाक्षेणाऽक्ष्णा व्यलोकि विलोकित-सार्वागम-नवनीतायमान-स्याद्वादरहस्यैरपि । मन्यामहे वय यद् भवता कथन नैकान्ततस्तत्त्वशून्यमिति। प्रायेण दोषाश्रितगतयो यतयोऽभूवन्निति नाऽनास्पदम् । परन्तु द्रव्य-क्षेत्र-काल-भावादीना प्रभाव सर्वत्र समुन्मीलतीति न सुधिया मतद्वैधम् ! क्व तद् वज्रर्षभनाराच-संहननम् ! क्व तत् समचतुरस्र-सस्थानम् ? कुत्र तत् पौर्वकालिक पूर्वलक्षाणामायु ? क्व सा स्वर्गिरिसन्निभा धृति ? क्व सा स्वर्गापगा[1]-सलिल-सोदरा विमला मति । क्व तत् परममनोरमं वैराग्यम् ? कुह सन्ति ते चतुस्त्रिंशदतिशयान्विता नाकि-नरेन्द्रपूज्या परमेष्ठिन ? कुत्र सन्ति ते विशिष्टोत्कृष्टलब्धिधरा गणधरा ? कुत्र सन्ति ते सर्वसञ्ज्ञिमनोगतभाववेदिनो मन पर्यवशालिन ? कुत्र सन्ति ते रूपिद्रव्यसाक्षात्कारिणोऽवधिज्ञानिन ? दृश्यन्ते क्वापि चतुर्दशपूर्विणः ?

---

१ स्वर्गापगा-गङ्गा ।

★ ## आठवां समुच्छ्वास

अप्रिय होते हुए भी माता की तर्जना के समान हितकारी, कडवी होते हुये भी चिरायता के समान ताप को दूर करने वाली, गल्य-चिकित्सा के तुल्य अन्तर-रोग की नागक हितेच्छु श्रावको के द्वारा कही हुई वाणी सुनकर वास्तविक हार्द पाने पर भी भिक्षु ने अपने गुरु के गौरव को उज्ज्वल बनाते यथार्थता को आवृत करते हुए कहा—"धर्मानुराग से जिनकी हड्डी और मज्जाएँ रगी हुई है, ऐसे भक्त श्रावको ! मर्वज्ञो प्रणीत आगमो का नवनीत के उपमान स्याद्वाद का रहस्य पाने पर भी तुमने माधुओ को खूब वक्र दृष्टि से देखा। हाँ ! हम यह जानते है कि तुम्हारा कथन पूरी तरह तत्त्व-शून्य नही है। प्राय. मुनिजन दोप की छाया मे पलने वाले हो गये है, यह शका अनुचित नही है, परन्तु द्रव्य, क्षेत्र, काल और भाव आदि का प्रभाव सब जगह होता है, इसमे विद्वद्जनो के दो मत नही है। कहाँ वह 'वज्र-ऋषभ-नाराच' सहनन, कहाँ वह 'समचतुरस्र' सस्थान ? कहाँ वह पूर्व कालिक लाखो पूर्वो की आयु ? कहाँ वह सुमेरु पर्वत के समान धृति ? कहाँ वह गगा नदी के जल के समान निर्मल मति ? कहाँ वह परम उज्ज्वल वैराग्य ? कहाँ है वे चौतीस अतिगयो से युक्त सुरेन्द्र-नरेन्द्र-पूज्य तीर्थङ्कर ? कहाँ है वे विगिष्ट और उत्कृष्ट लब्धि के धनी गणधर ? कहाँ है वे सर्व संज्ञी जीवो के मनोगत भावो के ज्ञाता मन पर्यवज्ञानी ? कहाँ है वे रूपी द्रव्यो को साक्षात् देखने वाले अवधिज्ञानी ? क्या दीखते है कही चतुर्दश-पूर्वी ? क्या श्रुतकेवली भी

छन्नालये सुप्ति, मत्कुणगण-सस्तुत गोमयलिप्तं प्राङ्गणम्, जागरण-रसिकाना मशकाना स्त्रागतगानम्, जातु वृश्चिकानामपि संगतम्, क्वचिद् भोगिनामपि[1] च योगिसेवार्थमागम । नूनं तत्र भानं भवेत्साधूना सौख्यपरम्पराया., तत्रात्मार्थिन एव निर्ग्रन्थास्तानि कृच्छ्राणि सम सहन्ते, अध्यासते, क्षमन्ते, तितिक्षन्ते च ।

श्रद्धालुशेखरा ! केवलमोष्ठ-जिह्वा-व्यायामे नानुभूयते मुनिमार्ग-दुर्गमता। छिद्र-दर्शने जनानामुन्निद्रा दृगप्यन्धीभवति; तदन्तस्तत्त्व-विमर्शने। कर्णामृताया सङ्गरकथाया[2] सपत्राकृति[3] जानन्ति प्राणान् करे कुर्वाणा अशान्तास्तत्र युद्धमाना विक्रान्ता[4]। वयमपि जानीमो भूरिश सेव्यमानान् दोषान्, परन्तु यदर्थं बलात् समयोऽनुरुणद्धि तत् सदोषमदोष वा कथमपि स्वीकार्यमेव स्यात्। विद्मो वयमपि यन्न भवति साधूना स्थानम्। यत्र कुत्रापि स्त्री-पशु-पण्डक-विरहितमेषणीयं स्थान सुलभं भवेत्तत्रैव यथाकाल स्थेयं महर्षिभिरिति, परन्तु कि कुर्महे, न तादृग् निर्दोष-मास्पद[5] सुप्रापं प्रतिग्रामम् । सकीर्णानि गृहमेधिना कुलानि[6]। न तत्र सुख समाविशन्ति[7] तत्पारिवारिका जना अपि, तत्र कथ साधूना स्थितिरौचित्यमास्कन्दति ? तत्रस्था साधव शृण्वन्ति गृहिणा परस्परालापान्, पश्यन्ति च तेषा यौवनारूढा कन्या, स्नुषाश्च। बालवैधव्यदग्धा स्निग्धा काचित्कामुकी लब्धावसरा व्रतिना ब्रह्मचर्ये चाञ्चल्यमापादयति। एकान्तमन्तरेण न जायते स्वाध्याय-ध्यानादिक शोभनतया। अत स्थानक-निर्माण स्वल्प दोष-दुष्टमपि बहु-गुणमिति मामकीना मति । पुस्तक-पात्रादी-न्यपि न सर्वदा सर्वत्र सुलभानि। यत्र मिलन्ति संगृह्णन्ति[8] संग्रह-कुशला आचार्योपाध्याया यथोचितम्। न स उपकरणराशिः

---

१. सर्पाणाम्। २. रणकथाया । ३. तीव्रा पीडाम्। ४ वीरा ।

शय्या, गोवर से लिपा हुआ खटमलो से सकुल वहाँ का आँगन, रातभर जागरण रसिक मच्छरो का स्वागत गान, कभी-कभी विच्छुओ और सर्पो का भी योगियो की सेवा मे आगमन हो जाता है तभी साधुओ की सौख्य-परम्परा का भान होता है। वहाँ आत्मार्थी निर्ग्रन्थ ही उन कष्टो को समता से सहते हैं और समभाव से रहते है।

श्रद्धालु श्रावको ! केवल होठ और जिह्वा के व्यायाम से साधुओ के मार्ग की दुर्गमता का अनुभव नही हो सकता। दोप-दर्शन मे खुली हुई आँख भी उसके अन्तर रहस्य को देखने मे अन्धी हो जाती है। कानो को अमृत के समान लगने वाली युद्ध-कथा की प्रचंड पीडा को, प्राणो को हथेली पर रखकर युद्ध करते हुये वीर ही जान सकते है। हम भी लगने वाले वहुत से दोषो को जानते है, परन्तु जिसके लिये समय एकदम विवश कर देता है उस सदोप या निर्दोष को किसी प्रकार स्वीकार करना ही पडता है। हम भी जानते है कि साधुओ के स्थान नही होते। जहाँ कही भी स्त्री-पशु आदि से रहित एषणीय स्थान सुलभ हो वही मुनियो को यथा-काल रहना चाहिये, परन्तु क्या करे प्रतिग्राम मे वैसा निर्दोप स्थान मिलना सुलभ नही होता। गृहस्थो के वडे वडे परिवार होते है। मकान मे जहाँ सुख-पूर्वक पारिवारिक जन भी नही समा पाते वहाँ साधुओ का ठहरना कैसे औचित्यपूर्ण हो सकता है ? वहा ठहरने वाले साधु गृहस्थो के आपस मे होने वाली वातो को सुनते हैं और यौवनवती कन्याओ तथा वहुओ को देखते है। काम-प्रताडित कोई वाल-विधवा मौका पाकर साधुओ के ब्रह्मचर्य मे चचलता लाने का प्रयास कर देती है। एकान्त के विना स्वाध्याय और ध्यान आदि के कृत्य भी अच्छी प्रकार से नहीं हो पाते। इसलिये स्थानकों का निर्माण स्वल्प दोष से दूषित होते हुये भी वहुत गुण वाला है, ऐसी मेरी मान्यता है। पुस्तक, पात्र आदि भी सदा सव जगह नही मिलते। जहाँ मिलते है सग्रह-कुशल आचार्य, उपाध्याय यथोचित

५ आस्पदम्-स्थानम्। ६ गृहाणि। ७ समाविष्टा भवन्ति। ८ संग्रह कुर्वन्ति।

निभाल्यन्ते किमु श्रुतकेवलिनाऽपि ? चतुरशीति-संख्याकेष्वागमेष्वपि अत्यल्पा [सकुचिताश्छिन्नभिन्नगतिमाप्ता आप्तागमा दृष्टिपथ पुनन्ति। तत्रापि भिन्नभिन्ना आचार्या भिन्नभिन्नमतावलम्बिन भिन्नभिन्नार्थप्ररूपका स्वदृष्टि-वैशिष्ट्यमाम्रेडयन्तो गर्वपर्वता प्रेक्ष्यन्ते। एकेन प्रतिपादित पर शकलयति,[1] परै शकलितमन्य सधत्ते। सत्यम्—आधुनिकमार्हतं मत तितउ-साहश्यमुच्चिनोतीति[2] सर्वप्रतीतम्।

श्राद्धा ! इदानीतने काले चेन्न वय समयमनुसरामस्तदा कथमिव जैनी परम्परा स्थास्नुतामाश्रयेत इति विचारणीयं विचक्षणै। यूयमेव पापभीरुका न वयमित्यचतुरस्रो विचार। ये वैरङ्गिकवृत्त्या सर्वा हस्तगता पौद्गलिकसामग्री पृष्टत कृत्वा वालुका-कवलमिव नीरस संयममग्राहिपत, कृत्स्नान् पूर्वापर-संवन्धान् जलाञ्जलि दत्त्वाऽऽप्राणधारण[3]मसाधारणमसि-धाराव्रत-मधृपत, नहि तेषा हृदये कि चारित्रस्य चिन्ता ? किमु मुधैव तैर्महाघोर ब्रह्मचर्यमाचर्यते ? किमन्तर्गडु[4] हि क्षुत्-तृषा-शीताऽऽतपा-दिकष्टानि मृष्यन्ते। किमफलमेव रोमाञ्चकृच्चिकुरलुञ्चन-परीषह सासह्यते। किमु वन्ध्यमेव यत्र तत्र सर्वत्र वभ्रम्यमाणैर्विपक्षाणा अनेकेऽभिभवा निर्वैर क्षम्यन्ते ? पुन यत् किमपि रुचितमरुचित, कदुष्णमुष्णं, कदन्न पक्वान्न सुवासित पर्युषित वा पात्र-पतितं भोज्य समतया भुञ्जानैर्महाव्रतिभिरेवावसीयते[5] साध्वाचार-दु-साध्यता। पुन प्रतपति मार्तण्ड-मण्डले तपर्त्तौ[6] विहरमाणा महाव्रता[7] कॉस्कान् परीषहान् न सहन्ते। यथा-प्रस्वेद-क्लिन्ना तनु, तृषाशुष्यदास्यम्, धृतभारौ स्कन्धौ, धूल्या दन्दह्यमानौ क्रमौ, न मिलति ग्रामटिकासु यथार्हं शीतलं नीरम्, वीतवातायने

१ खण्डयति। २ चालनीतुल्यम्। ३ यावज्जीवम्। ४ निरर्थकम्।

कहाँ दृष्टिगोचर होते है ? चौरासी संख्या वाले आगमो मे बहुत थोड़े रह गये हैं, वे भी संकुचित और छिन्न-भिन्न हो गए हैं। इतने पर भी भिन्न-भिन्न मतावलम्बी, विभिन्न आचार्य अलग-अलग अर्थो की प्ररूपणा करते हुए अपनी ही दृष्टि का बार-बार वैशिष्ट्य बताते हुए गर्व के पर्वत बने दीखते है। एक का प्रतिपादित मत दूसरा खण्डित करता है। त्यो ही एक के द्वारा खण्डित किया हुआ मत दूसरा मण्डित करता है। निश्चित ही आधुनिक जैन संघ छलनी के समान बन चुका है। यह सर्वविदित है।

श्रावको ! इस काल मे हम समय के अनुसार न चले तो जैन परम्परा कैसे टिक सकती है ? यह तुम्हारे जैसे चतुर श्रावको को विचार करना चाहिये। तुम्ही पाप भीरु हो, हम नही है, यह अनुचित विचार है। जिन्होने वैराग्य-वृत्ति से सब उपलब्ध पौद्गलिक सामग्री को पीठ देकर, बालू के कवल के समान नीरस संयम को ग्रहण किया है, जिन्होने आगे-पीछे के सब सम्बन्धो को जलाञ्जली देकर जीवन-पर्यन्त असाधारण असिधारा-व्रत धारण किया है, क्या उनके हृदय मे चारित्र की चिन्ता नही है ? क्या व्यर्थ ही वे महाघोर ब्रह्मचर्य का पालन करते है ? क्या बेमतलब ही भूख, प्यास, सर्दी और गर्मी आदि के कष्ट सहते है ? क्या निष्फल ही रोंगटे खड़े कर देने वाला केश-लुंचन का संकट सहन करते है ? क्या बेकार ही जहाँ-तहाँ सब जगह परिभ्रमण करते हुये विरोधियो के अनेक आतंक निर्वैरभाव से सहन करते है ? और रुचता या अरुचता, ठण्डा या गर्म, खराब अन्न या पकवान, ताजा पकाया हुआ या बासी जो कुछ पात्र मे आता है उस भोजन को समता से खाते हुये महाव्रती ही साध्वाचार की दु साध्यता जानते है। प्रचण्ड सूर्य से संतप्त ग्रीष्म-ऋतु मे विहार करने वाले महाव्रती कौन कौन से परीषहो को नही सहते ? पसीने से गीला शरीर, प्यास मे सूखा हुआ मु ह, बोझ लदे हुये कन्धे, उत्तप्त धूल से जलते हुये पैर, इतने पर भी छोटे गाँव मे कल्प के मुताबिक पीने योग्य पानी का नही मिलना, झरोखो से रहित एकदम छाये हुये मकान मे

५. ज्ञायते। ६. ग्रीष्मर्तौ। ७ महान्ति व्रतानि येषा ते महाव्रता मुनय'।

प्रतिग्राममुद्‌वोढुं शक्य, अत स्थानके स्थापनं तस्य नौचित्ती-मतिक्रामति किञ्चिद् दोपभागपि।

धर्म-मर्मज्ञा! तुरीयार-मुनितुलाया[1] कथं तोलयन्ति भवन्तो दु षमार-तुलातोलनीयानैदयुगीनान्मुनीन्! वाकुशिकाः प्रतिसेविनोऽपि निर्ग्रन्था न सन्ति किमु निर्ग्रन्थषट्के स्थानमाप्ता भगवत्याम्! चेद् दोपा न समुद्भवेयुस्तदा काऽऽवश्यकता ननूभयो सन्ध्ययो प्रतिक्रमणस्य! षड्भि कारणैश्छद्मस्थ जानीयादिति शास्त्र-निरूपणपरा भगवदुक्तिर्निरस्यति सदिहानाना सन्देहान्। स तु हिसामपि विदधाति, मृषामपि वक्ति, यावन्न यथावादी तथाकारी च भवतीति।

वत! वत! यावन्नोन्मिपति रङ्गत्सप्तभङ्गी-नय-निक्षेपतरङ्गिता दृष्टिस्तावद् वहुविदितमपि नहि सम्यक्त्वाभिव्यक्ति करोति पण्डितमन्यानामपि। प्रतिपदं प्रतिविम्विता स्युरुत्सर्गाऽपवादा निर्वाधा विधि-निषेध-संवादा समयेषु[2]। यदेकत्र निषिध्यते तदेवा-[3]ऽपोद्यतेतरामन्यत्र। सर्वत्र द्रव्य-क्षेत्र-कालादि-भावा हेतुत्वमाद्रियन्ते। नहि प्रत्यक्षेऽपि प्रतिक्षिपन्ति सुमेधसो द्रव्यादीन्। क [4]प्रालेय-कालार्हमाविक[5] कम्वल विभर्त्ति तनुतरवस्त्रश्लाघे निदाघे[6]! अतो ग्राह्याग्राह्य - कल्प्याऽकल्प्य - त्याज्याऽत्याज्य - पथ्याऽपथ्य-सेव्याऽसेव्यादिविकल्पा द्रव्यक्षेत्र-कालादितल्पे शयाना एव शोभन्ते-तमाम्। अनेकान्तमेव कान्त प्रतिभाति विविक्तात्मना हृद्दर्पणे। नह्येकपल्लवग्राहि सदेवेति निश्चयानुयायि चैकान्तम्।

आधाकर्मिकौद्देशिकाद्या अतिचारा अपि विचारतुलाया सचारिताः सन्त सुतरा संगच्छन्तेऽच्छतया। यथाधाकर्मादिदोषान्

---

१ चतुर्थाऽरमुनिसमानतायाम्। २. शास्त्रेषु। ३ अपवादरूपेण

सग्रह करते हैं। वह उपकरण मंचय हर गाँव नही ढोया जा सकता। इसलिये थोडा दोप होते हुए भी उसे स्थानक मे रखना उचितता की मर्यादा को नही लाँघता।

धर्म-मर्मज्ञो! दु पम पंचम काल के तुला मे तोलने योग्य आधुनिक मुनियो को आप चौथे आरे के मुनियो की तुला मे कैसे तोलते हैं? भगवती सूत्र मे वर्णित छह प्रकार के साधुओ मे वाकुगिक और प्रतिसेवी भी क्या निर्ग्रन्थ नही होते? यदि किसी प्रकार के दोप नही होते हो तो दोनो सन्ध्याओ मे प्रतिक्रमण करने की क्या आवश्यकता है? 'छह कारणो से छद्मस्थ को जानना चाहिये' शास्त्रगत यह भगवान् की उक्ति शंकाशीलो की शका का निरसन कर देती है। छद्मस्थ तो हिसा भी करता है, मृपा भी वोलता है, यावत् यथावादी तथाकारी नही होता।

वस-वस जब तक सप्तभगी, नय एवं निक्षेप से युक्त होकर दृष्टि परिष्कृत नही हो जाती तव तक पण्डित-मानियो का वहुत जाना हुआ भी सम्यक्त्वमय नही होता। आगमो मे उत्सर्ग, अपवाद, विधि, निपेध के सम्वाद अवाधित रूप से पद पद पर प्रतिविम्वित है। जिसका एक जगह निपेध किया गया है उसको दूसरी जगह अपवाद रूप से स्वीकार किया गया है। सब जगह द्रव्य, क्षेत्र, काल और भाव के हेतुत्व का ममादर किया गया है। विद्वान् लोग प्रत्यक्ष मे भी द्रव्य आदि का खण्डन नही करते। एकदम महीन वस्त्र धारण करने योग्य गर्मी के दिनो मे कौन शीतकाल के उपयुक्त कम्वल को धारण करता है, इसलिये ग्राह्य-अग्राह्य, कल्प्य-अकल्प्य, त्याज्य-अत्याज्य, पथ्य-अपथ्य, सेव्य-असेव्य आदि के विकल्प द्रव्य, क्षेत्र काल और भाव के माध्यम से ही सुलझाये जा सकते है। विवेकशालियो के हृदय-दर्पण मे अनेकान्त ही प्रतिविम्वित होना है। 'सत् ही है' ऐसा एक पल्लव-ग्राही निश्चयात्मक दृष्टिकोण सही नही है।

आधाकर्मी और औद्देशिक आदि अतिचार भी विचार की तुला पर चढाने के वाद अच्छी तरह संगत दीखने लगते है। जैसे कि आधाकर्मी आदि

---

स्वीक्रियते। ४ शीतकालधारणीयम्। ५. आविकम्, ऊनी, इतिभापा। ६ उष्णकाले।

नोत्सर्गमार्गं सेवन्ते महर्षय, परन्त्वातङ्के, दुर्भिक्षे, जराग्लानाद्यवस्थाया वाऽनाचीर्णान्याचरन्तोऽप्याचारिणो नह्यनाचारिणो भवन्तीति राद्धान्ताना[1] ध्वनि । तद्दातारोऽल्पपापसेविनोऽपि वहुनिर्जराजर्जरितपापप्रकृतयो जायन्त एवेति स्पष्टा प्रतिभू[2]र्व्याख्याप्रज्ञप्ति ।

श्राद्धा । राद्धान्ताना रहस्य नह्यपर्युपरि चङ्क्रम्यमाणै सुप्राप गुरोरवगमं विना । सेवित-मितद्रुतीरो धीरोऽपि[3] कि प्राप्नोति शङ्ख-शूक्तिकाद्यतिरिक्तम् । मौक्तिकादिक तु स एव साहसिकशिरोमणिर्लभते य प्राणान् पणीकृत्यागाधजलमकूपारतलमवगाहते[4] धीवरतामाश्रयमाण । एकैकस्याप्यक्षरस्यानन्तसख्याका गमा आगमिकै स्वीक्रियन्ते, तदा कथ सामान्यधीधरो नर स्वबुद्ध्या कल्पितानेवार्थान् प्रमाणीकृत्य परै प्रस्तुतान् भावानपलपति ? एकमेव वाक्य पदच्छेदेन, विरामभेदेन, काकुध्वनिना वा प्रयुक्तमर्थपार्थक्य श्रयते, तदा कथमिव विशिष्ट ज्ञानं विना न पुनर्विचारचारार्हा[5] स्वमान्यता प्रचार्यते दुराग्रहव्यग्रेण सदपेक्षासामग्री-शून्येन ।

पुनः शिष्यविपयमुद्भावयद्भिर्भवद्भिर्यद्दोषरज्जुरायामि[6] तत्रापि विमर्श-वैकल्यमेव शल्यमुत्पादयतीति मे निर्णय ।

किञ्च-वितत-मायाजाले साम्प्रतिके काले चकास्ति कि पूर्वसमयसमा तत्त्व-चिन्तन-पावनाऽपूर्वा वैराग्यभावना ? क्वास्ति जम्बूकुमार-शालिभद्र-मेघकुमार-धन्यर्षि-समकक्षा दीक्षाया स्थिति ? अधुना तु याथाकथाच, येन केन प्रकारेण, य कमपि, विशेषज्ञमल्पज्ञ वा, कुलीनमकुलीन वा, स्वयमागत मूल्य-क्रीत वा शिष्य शिष्या च यदि न दीक्षयामस्तदा कथ चलति साधुवंशपरम्परा ?

---

१ सिद्धान्तानाम् । २ साक्षी । ३. प्राप्त-समुद्रतीरो । ४ अकू-

दोषो का साधुजन उत्सर्ग मार्ग (साधारण चर्या) मे सेवन नही करते, परन्तु आतक, दुर्भिक्ष और ग्लान आदि विवश दशा मे ही करते है। ऐसी स्थिति मे अनाचरणीय का आचरण करते हुए भी मुनिजन भारी दोषो के सेवन करने वाले नही होते, यह सिद्धान्तो की ध्वनि है। उपर्युक्त आहारो के दाता अल्प पाप का सेवन करते हुए भी बहुत निर्जरा के कारण पाप प्रकृति को जर्जरित करने वाले होते है। इसकी स्पष्ट साक्षी भगवती सूत्र है।

श्रावको! गुरु-सेवा के विना सिद्धान्तो का रहस्य केवल वाह्य ज्ञान से नही मिलता। समुद्र के एक किनारे खडा व्यक्ति शख, सीप आदि के सिवाय क्या पा सकता है? मोती आदि रत्नो को तो वही साहसिक-शिरोमणि धीवर पाता है जो प्राणो को हथेली मे लेकर अगाधजल मे जाकर समुद्रतल का अवगाहन करता है। आगमकारो ने एक-एक अक्षर के भी अनन्त गम्य (तात्पर्य) स्वीकार किये है, तव सामान्य वुद्धि वाला मनुष्य अपनी वुद्धि से ही कल्पित अर्थो को ही प्रमाण मानकर दूसरो द्वारा प्रस्तुत किये गये भावो का कैसे खण्डन कर सकता है? एक ही वाक्य पद-छेद से, विराम भेद से या ध्वनि-भेद के कारण प्रयुक्त अर्थ से भिन्न अर्थ का बोधक हो जाता है। तव फिर कैसे विशिष्ट ज्ञान के विना दुराग्रह-ग्रस्त होकर निरपेक्ष भाव से 'इस पर पुनर्विचार की आवश्यकता नही' ऐसी अपनी मान्यता का प्रचार किया जाता है।

पुन तुमने शिष्यो के विषय को उठाते हुये जो दोष वतलाए है वहाँ पर भी चिन्तन-शून्यता ही परिलक्षित होती है, ऐसा मै मानता हूँ। क्योकि फैले हुये माया-जाल वाले इस काल मे प्राचीन समय के समान अपूर्व वैराग्य-भावना कहाँ है? जम्बूकुमार, शालिभद्र, मेघकुमार और धन्यमुनि के तुल्य दीक्षा की दशा कहा है? अव तो जैसे तैसे, जिस किसी प्रकार से, जिस किसी को, विशेषज्ञ या अल्पज्ञ, कुलीन या अकुलीन, स्वय आए हुए या खरीदे हुए

---

पारतलम्—समुद्रतलमित्यर्थ। ५ पुनर्विचारणीया। ६ दीर्घीकृता।

प्रतिग्राम श्रावका मार्गयन्ति साधूना साध्वीना चतुर्मासीम्। यदि न स्यात् शिष्यसपद् तदा कथमेधते जनताया धर्मभावना। रक्षक-विहीन क्षेत्र कियत्कालं स्थेष्ठं[1] स्यादिति विचारणीयम्। यथाकथञ्चिद् गृहीतेष्वपि नहि निस्सरन्ति योग्या इति न यथातथम्। भद्रा जडा मन्दमेधसोऽपि शिष्या सद्गुरु-साहचर्यमाप्ता दृश्यन्तेऽङ्गुलीगृहीतनामधेया साम्प्रतमपि। नहि कोऽपि जातमात्रो निकषार्हो जाजायते योग्यायोग्य-निकष पाषाणे। भवति शुक्तिगत वारि मौक्तिकम्, द्विजिह्व[2]जिह्वाऽऽलीढ तदेव जल जायते हालाहलम्। अतोऽलं पूर्वपरीक्षया दीक्षया, शिक्षयैव नरो वोभवीति भविष्यत्वरो गुणिशेखर, नानाविध-विद्यामण्डनमण्डित प्रखरपण्डितश्च। प्रश्चात्कृता भूग्शिो मुनी-भूयापीति न तर्कणीयम्। तीर्थकृद्-विद्यमानतायामपि नन्दीषेणा-षाढभूति-मेघकुमार-प्रभृतय न किं पुन पतिता दशामापन्ना.? केन निर्णेतु पार्यते यत् कस्मिन् काले कस्य भावना कीदृशी भवित्रीति? अतो[3]ऽस्तिमद्भिर्दीक्षा-दानविषये यत् किमपि योगदान दीयते तन्न सर्वथा हेयमिति मे मान्यता। स्थित्यनुसार कार्य-कारीनूनमार्य-सत्तमो विलसतीति विदा वचः।

अन्तरीया स्थिति कीदृगस्तीति ,न गभीरे नीरे प्रवेष्टव्यम्। शोभन्ते सर्वेपि परिहित-सिचया[4]च्छन्नशरीरा धीरा वस्त्रेषु न कि नाग्न्यमङ्गीकुर्वन्ति गुप्ताङ्गोपाङ्गान्यपि तेषाम्। यत्राऽस्ति संघो जागर्त्येव तत्रान्तरङ्ग कोऽपि विकारो यदा कदा। प्रती-कारोऽपि जायत एवाचार्यद्वारा यथासाध्यः। न कि समुत्पद्यन्ते हृष्ट - पुष्ट - शरीरेऽपि नानाविधागदा। नहि यूकोत्करोत्पत्तौ वाससा परित्याग. श्लाध्यः सुधीभि। योद्धव्य खलु कृतसुखापकर्षै संघर्षै. सार्वमाय शूलिकै[5]।

---

१ अतिशयेन-स्थिरम्। २. सर्प-जिह्वा। ३ धनिभि। ३ धृत-

को शिष्य या शिष्या के रूप मे यदि दीक्षित न करे तो साधु-परम्परा कैसे चले ? हर गाँव के श्रावक साधु साध्वियो के चातुर्मास की माँग करते है। यदि शिष्य-सम्पदा न हो तो जनता की धार्मिक भावना कैसे वृद्धिगत हो ? रक्षक विना खेती कैसे टिक सकती हैं, यह सोचना चाहिये। जैसे तैसे ग्रहण किये हुओ मे योग्य नही निकलते, यह वात यथार्थ नही है। सरल, भोले और मद-वुद्धि शिष्य भी सद्गुरु का पवित्र सान्निध्य पाकर अगुलियो पर नाम गिनने योग्य हो जाते है। ऐसा प्रत्यक्ष देखा जाता है। कोई भी उत्पन्न होते ही योग्य-अयोग्य की कसौटी पर कसने योग्य नही होता। जो पानी सीप के मुँह मे जाकर मोती वनता है, वही पानी सर्प के मुँह मे जाकर हलाहल वन जाता है। इसलिये पूर्व-परीक्षित दीक्षा का कोई इतना मूल्य नही रह जाता। शिक्षा के द्वारा ही मनुष्य भविष्य मे सुन्दर, गुणियो का शिरमौर, विभिन्न प्रकार की विद्याओ से मण्डित और प्रखरपण्डित वन जाता है। मुनि वनकर भी वहुत से वापिस चले जाते है, यह तर्क भी मत करना, क्योकि तीर्थङ्कर महावीर की विद्यमानता मे भी नन्दीषेण, आषाढभूति और मेघकुमार आदि क्या वापिस पतित दशा को प्राप्त नही हो गये थे ? कौन निर्णय कर सकता है, किस समय किसकी भावना कैसी हो जायगी ? इसलिये धनवान श्रावक दीक्षा दान के विषय मे जो कुछ भी योगदान देते है वह सर्वथा हेय नही है, ऐसा मेरा अभिमत है। 'समय के अनुसार कार्य करने वाले ही आर्य-श्रेष्ठ होते हैं।' यह तत्वज्ञो की वाणी है।

आन्तरिक स्थिति कैसी है, इस गहरे पानी मे उतरने की आवश्यकता नही। सव ही कपडे पहने हुये और शरीर ढके हुये सुशोभित होते है। वैसे कपडो मे कौन नग्न नही है ? जहाँ सघ है वहाँ अन्तरग कोई विकार जव तव जागता ही रहता है। आचार्य के द्वारा इसका यथासाध्य प्रतिकार भी होता ही है। हृष्ट-पुष्ट शरीर मे भी क्या अनेक प्रकार के रोग उत्पन्न नही हो जाते ? जूओ के भय से वस्त्र-परित्याग को कोई विद्वान् सगत नही वता सकता है। सुख का अपकर्ष करने वाले सघर्षो के साथ कर्मठो को कडाई मे युद्ध करना ही चाहिये।

---

वस्त्रा'। ५. तीक्ष्णकर्मकृद्भि।

इदमेव प्रान्ते निगद्य विरमामि, यत् स्वकीय तत् कथमपि रक्षणीय, प्रतिपालनीय, क्वापि स्थगनीयमाविष्करणीय च किमपि शासनरक्षार्थम्। न तादृक् किमप्यनुष्ठेयं यथा स्वगौरवं धूलिसात्स्यात्।

धारासारै: प्रवृष्य विरिरसुमु'दिर इव तूष्णीमासेवमाने भिक्षुकुञ्जरे भिक्षौ श्रावका प्रभाविता इवाऽऽश्चर्यचकिता इव समजनिपत। तद्विशालबुद्धिवैभवं संलक्ष्य पुनरसाधारणचातुर्यमाकलय्य प्रसन्न-वदनारविन्दा सविनयमचीकथन्—"भगवन्! यादृगी युष्माकं कुन्देन्दु-हरहास-समुज्ज्वला कीर्त्तिस्ततोऽप्युत्कृष्ट युष्मासु गुणगौरव, विद्यावैभव, वाचोयुक्तिपाटवं च समधिगम्य मोमुह्यन्तेऽस्माकमन्त करणानि। अल्पेऽपि समये समयानां स्वध्ययनमकारि श्रीमद्भिरित्यध्यक्षमेवान्वभावि[1] अस्खलितां भवत्प्रयुक्तिशैलीमनुभूय। वय तु नितान्तमल्पज्ञा: कि पुन: पृच्छाप्रागल्भ्य विद्‌महे। यत् किमपि प्रत्युक्त तद् युक्तियुक्तमेव भवताम्, परन्त्वास्माकीना स्वच्छ-हृदयसमुत्था शङ्कुवत् हृदय क्लिश्यमाना शङ्का नहि निर्मूलनाश नष्टा। न क्षमामहे वयं बहुश्रुतानामग्रतस्तर्क-कार्कश्य निदर्शयितुम्; तथापि वधुराण्यपि भवता प्रत्युत्तराणि सामस्त्येन सत्यधुरन्धराणीति नास्माकमात्माङ्गीकर्त्तु'मलम्।

अस्तु, युष्माकं साहजिकं वैराग्य, समुज्ज्वलं चारित्रं च निरीक्षमाणा ससम्मानं भवन्त त्रि:[2]कृत्वो वन्दामहे, आदक्षिणप्रदक्षिणा च कुर्महे, पुनराशास्महे शीघ्रमायास्यति निकटभविष्ये हि कोऽपीदृश सुसमयो यदा स्वय भवन्तोऽपि स्वाचार-विषये

---

१ अध्यक्षमेव-प्रत्यक्षमेव। २ तीन वार, इतिभाषा।

अन्त मे यही कहकर मैं विराम लेता हूँ कि जो अपना है उसकी किसी प्रकार रक्षा और प्रतिपालना करना ही चाहिये। शासन की रक्षा के लिये कही कुछ स्थगित एव कही कुछ नया लागू करना ही चाहिए, परन्तु ऐसा कुछ भी नही करना चाहिए जिससे स्व-गौरव मिट्टी मे मिल जाये।

तीव्र वेग से बरसे हुये मेघ के समान भिक्षु के मौन होने पर श्रावक प्रभावित एवं आश्चर्य चकित हो गये। उनके विशाल बुद्धि-वैभव को और असाधारण चातुर्य को देखकर प्रसन्नमुख से सविनय बोले—"भगवन्! जैसी आपकी कुन्द-कुसुम, चन्द्रमा और शंकर के हास्य के समान समुज्ज्वल कीर्ति है, उससे भी उत्कृष्ट आप मे गुणगौरव, विद्या वैभव और वक्तृत्वकौशल को देखकर हमारा हृदय हर्ष-विभोर हो रहा है। अल्प समय मे ही आपने बहुत अच्छा अध्ययन कर लिया है, यह आपकी अस्खलित प्रत्युत्तर शैली को देख कर हमने प्रत्यक्ष अनुभव किया है। हम तो निरे अल्पज्ञ है। आपसे हम लोग क्या पूछने का साहस दिखलाये? आपने जो समाधान दिये है वह युक्तियुक्त ही है, परन्तु हमारे निर्मल हृदय मे उठी शका शकु की तरह हृदय को प्रपीडित करती है वह निर्मूल नाश नही हुई है। आप जैसे बहुश्रुतो के आगे हम तर्क की कर्कशता दिखाने मे समर्थ नही है, फिर भी आपके सुन्दर उत्तर पूर्णतया सत्य की धुरी को वहन करते है—यह हमारी आत्मा स्वीकार करने को तैयार नही है।"

अस्तु, आपके सहज वैराग्य और उज्ज्वल चारित्र को देखते हुये हम सम्मान सहित आपको तिक्खुत्ते के पाठ से वन्दना करते है, आदक्षिण-प्रदक्षिणा देते हैं और आशा करते है कि निकट भविष्य मे शीघ्र ही कोई ऐसा

विभ्रष्टुं वाधिता भविष्यन्तीति। यत् सत्यं तत् सदातन सत्यमेव, न तत् कदापि परावर्त्ततुं शक्यते केनापि नाकिनायकेन[1]।

एव विज्ञप्य सविनयमुर्ध्वंदमीभूय[2] त्रि कृत्व[3]-पाठमुच्चारयन्तो विधिवद् वन्दना विधाय स्व स्व स्थानमासेदिवासस्ते।

इति श्री चन्दनमुनि-विरचतेऽभिनिष्क्रमणाख्ये महाकाव्ये गद्यप्रबन्धे अष्टम: समुच्छ्वास : ।।

१. इन्द्रेण। २ खड़े होकर, इतिभाषा। ३ तिक्खुत्ता के पाठ को बोलते

समय आयेगा, जब आप स्वय ही अपने आचार के विषय मे चिन्तन करने के लिये बाधित हो जायेंगे। जो सत्य है वह शाश्वत सत्य ही रहता है, वह कभी किसी इन्द्र के द्वारा भी परिवर्तित नही हो सकता।

इस प्रकार वे सविनय विज्ञप्ति कर खडे खडे तिक्खुत्तो के पाठ का उच्चारण करते हुए विधिपूर्वक वन्दना करके अपने अपने स्थान को लौट गए।

## आठवां समुच्छ्वास समाप्त



---

इतिभाषा।

## नवमः समुच्छ्वासः | *

वाह्याचारैश्चञ्चच्चातुर्य-चुम्बित-विचारैरपि सर्व-जगज्जन्तु-जात-हितं शास्त्र-विहितं नहि सत्यमपिहितमास्ते[1]। क करेण वसितु[2] शक्यतेऽर्यमाण[3] प्रभाभि स्वयमुद्भासमानम्। आयस्यत्यल्पमति[4] स्वमति-कौशलेन याथार्थ्य व्यर्थयितुम्, किन्तु भ्रामयति प्रकृति-रीदृग चक्र, यथा स्वत सत्यमुद्घाटित स्यात्, पाटित स्याद् गाढमपि च छद्मावरणम्।

आचार्य-प्रदत्त स्वकार्य सम्यक् सम्पन्नमिति मोमुद्यमानो भिक्षुरित्थ विभावयितु लग्न—"क्व गावो गोपालकमवगणय्य स्थातु शक्नुयु? प्रस्तरान् न्यायाश्च विश्वकर्मेव कुशलकर्मा कारुर्यथा - यथा चिचीपते तथा-तथा ते चारुचितिमञ्चन्ति वैचित्रीमारचयन्त 'क पन्था' इति पर्यनुयोगे 'महाजनो येन गत स पन्था' इति युक्तियुक्तोक्तिर्विलसति प्रमाणितवचनानाम्।

अहो! कियत्यो विचिकित्सा आसन् श्रावकाणा मानसमन्दिरे रममाणास्ता मम स्वल्प-प्रयासेनैवाभ्रविलाय विलीना। परि-पीनतामाप्नुवन् ध्रुवमस्माभिराचर्यमाणा सामयिक-रुचिरुचिरा परम्परा। कुतोऽपि जायमानं सूक्ष्ममपि छिद्रं तत्कालं

---

१ पिहितं अपिहित। २. वस आच्छादने—इत्यस्य धातोर्वसितुमाच्छा-

★ | # नौवां समुच्छ्वास

सभी प्राणी वर्ग के लिए हितकारी जो शास्त्र-विहित सत्य है, वह बाह्य आचारो और चातुर्य-पूर्वक प्रस्तुत किए गए विचारो के द्वारा कभी आवृत नही हो सकता। किरणो से स्वय उद्भापित होते हुए सूर्य को हाथ से कौन ढक सकता है ? मन्द-बुद्धि ही अपने मति-कौशल से यथार्थ तत्त्व को व्यर्थ करने का आयास करता है, किन्तु प्रकृति ऐसा चक्र घुमाती है कि सत्य स्वत उद्घाटित हो जाता है और छद्म का सघन आवरण भी फट जाता है।

आचार्य के द्वारा सौंपा हुआ अपना काम अच्छी तरह से सम्पन्न हो गया है, इसका मोद मनाते हुए भिक्षु यो सोचने लगे—"गौए गोपाल की अवगणना करके कहाँ रह सकती है ? पत्थरो और न्यायो को तो विश्वकर्मा के समान कुशल कारीगर जहाँ-जहाँ लगाता है वहाँ-वहाँ वे विचित्रता लिए हुए उचित दीखने लग जाते है। 'मार्ग कौन सा है ? यह पूछने पर, 'जिससे बहुत आदमी गुजर चुके हो वही मार्ग है' यह प्रामाणिको की उक्ति युक्ति-युक्त है।

अहो ! श्रावको के मन-मन्दिर मे कितनी शकाए उछल-कूद मचा रही थी, वे सब मेरे थोडे से प्रयास से ही बादलो की ज्यो विलीन हो गई। समय के अनुरूप आज हम जिस परम्परा का अनुसरण कर रहे है वह परिपुष्ट बन गई। 'कही से अवकाश पाते हुए सूक्ष्म मात्र छिद्र को भी बन्द करना

---

दयितुमित्यर्थं। ३ सूर्यम्। ४ आयासं करोति।

स्थगनीयमित्यार्याणा वर्या त्रिचारधारा। स्वल्पमपि प्रणाय्यं[1] तत्त्व सत्त्वमापेदानं नहि सासह्यं मुशासकं मुन्दरकार्यशृङ्खला-सञ्चालयद्भि ।

नून वयं शुभशकुन-प्रेरिता शुभमुहूर्त्त-प्रस्थिता शुभलग्ने हि प्रवेश प्राप्ता अत्र नगरे, अत एवाऽऽगतमात्रैरस्माभिर्दुष्कर-कल्पित सूक्ष्म-बुद्धिश्रम-साध्य साफल्य तत्कालमलम्भि।

अस्तु, साम्प्रतं निष्कण्टकं निष्प्रत्यूहं[2] प्रावृषेण्य[3] निवासमति-वाहयिष्यामोऽत्र भक्तिभाजा श्रावकाणा भक्त्या पेप्रीयमाणा यथासुखम्। अग्रे गुरवोऽपि स्वेष्ट-कार्य-सम्पादनादस्मान् परम-प्रीत्या सम्मानयिष्यन्तीति निश्चय । आत्त-कार्यस्य[4] निर्वाह एव महतामानन्दहेतु. स्यात् कि कथनीयमत्र।

तस्मिन्नेव दिने सायंकाले कृतोत्सूत्रप्ररूपणाया प्रायश्चित्तरूप इवाऽऽकस्मिक स्वोत्कृष्टवेगधर शीत-ज्वर श्रीभिक्षुवपुराचक्राम। तीव्रार्चिष्मता[5] संतप्तशुचीप-समानास्तस्य[6] सार्धत्रिकोटिमाना रोमराजयस्तीव्रामुष्णतामुद्वेमु । नक्तंदिव विरक्तस्य नीरुपश्चापि भिक्षोरम्वकयामले[7]ऽदृष्टपूर्वो रक्तिमा व्यानशे। कतर आवयो पीडा कर्मणि वैशिष्ठ्यमावहतीति स्पर्धयेव त्रिक-मस्तकाभ्या[8] पूर्णं स्ववल पर्यैक्षि। शयनमेव शान्तेरयनमिति[9] प्रत्याय्य तमासनं शाययद् विप्रलम्भयाञ्चक्रे, तद्वदासनमेव[10] समाश्वसनमिति निर्दिश्य पुन शयनं स्वीकारयामास। भव-भ्रमण-नाटकं प्रकटयन्तीव भ्रमि-स्तं विपरीतमुद्वोधकं वम्भ्रम्यमाण लोक प्रत्यक्षीकारयाञ्चक्रे। सर्वमप्येकत्रीकृतमेनो[11] वहिर्निष्कासयन्तीव वमिराभीक्ष्ण्येन सर्वाण्य-

---

१ असम्मतम्। २ निरन्तरायम्। ३ प्रावृट्कालसबन्धि, चातुर्मासिकमित्यर्थ। ४. गृहीत-कर्मण। ५ अर्चिष्मान् वन्हिस्तेन।

चाहिए', यह गुरुओ की सही विचारधारा है, क्योंकि सुन्दर कार्य-शृंखला का सचालन करने वाले सुशासक किंचित् भी असम्मत तथ्य को बलिष्ठ होने नही देते।

निश्चित ही हम शुभ-शकुन से प्रेरित शुभ मुहूर्त मे चले थे और शुभ लगन से ही नगर मे प्रविष्ट हुए है, इसीकारण हमने आते ही दुष्कर, गम्भीर एव बुद्धि-श्रम-साध्य सफलता को तत्काल पा लिया है।

अस्तु, अव यहाँ भक्तिमान श्रावको की भक्ति से आनन्दित होते हुए हम निष्कण्टक, निर्विघ्न यथेच्छ वर्षावास का समय वितायेगे। आगे गुरु भी अपना इष्ट कार्य कर देने के कारण परम स्नेह से निश्चित ही हमारा सम्मान करेंगे, क्योकि प्रस्तुत कार्य का सम्यग् निर्वाह करना ही महान् व्यक्तियो के लिए आनन्द का हेतु होता है। इसमे कहने की क्या बात है ?

उसी दिन सायकाल-उत्सूत्र प्ररूपणा करने के प्रायश्चित्तरूप मानो अकस्मात् उत्कृष्ट वेग से शीतज्वर ने श्री भिक्षु के शरीर पर आक्रमण कर दिया। प्रचण्ड आग से तप्त तवे के समान उनकी साढे तीनकरोड प्रमाण रोम-राजि तीव्र उष्णता का उद्वमन करने लगी। दिन-रात विरक्त और अरोष (प्रशान्त) रहने वाले भिक्षु की दोनो आँखो मे अपूर्व रक्तिमा व्याप्त हो गई। हम दोनो मे कौन पीडा करने मे विशिष्ट है मानो इस स्पर्द्धा से मस्तक और कटि की पीडा ने अपना पूर्ण वल अजमाया। लेटना ही शाँति-प्रद है—यह विश्वास दिलाकर आसन ने उन्हे सुलाकर ठग लिया। उसी प्रकार आसन ही समाश्वसन (सुख) है यह दिखाकर शयन ने उन्हे पुन विठा दिया। भव-भ्रमण का सादृश्य प्रकट करते हुए भ्रमि रोग ने उस विपरीत बोधक को घूमता हुआ-सा लोक प्रत्यक्ष दिखा दिया। सभी एकत्रीकृत पाप को वाहर निकालती हुई सी, आँतो को निर्दयता से ऊ ची चढाती हुई वार-वार 'हो-हो'

---

६ शुचीषम्-शुजीषम् 'तवा' इति भाषायाम्। ७ नेत्रयुगले। ८ त्रिक—कटि। ९ शान्ते स्थानम्। १० कर्तृपदम्। ११. एन —पापम्।

न्त्राणि निशूकमूर्ध्वमानयन्तीव[1] सह ह-हो शब्द वामयाञ्चकार। रसनया स्वीकृतेऽस्वादव्रते स्वावमाननात्कुपितेव जठर-पिठर परित्यज्य क्वापि समीरसेवार्थं प्रस्थिता बुभुक्षा। तप्तशिलेवाऽम्भोऽन्त प्रवेशयितुमक्षमपि भृश मार्गयति जल भिक्षोरोष्ठपुट शुष्कयन्ती तृट्। ग्लायति स्म हृदयम्, म्लायति स्म मुखम्, त्रुट्यन्ति स्म सर्वेऽपघनाश्च शरीरस्य तस्य। शय्याया परित सर्वेऽपि विमनायमाना मुनयस्त यथाशक्यमुपचरन्तिस्म, वैयावृत्यं च विदधतिस्म।

प्रत्यक्षेऽपि शास्त्रालोके प्रत्यक्षेपि[2] येन भगवदाज्ञा कि तस्य मुखप्रेक्षणेनेतीव रुषेव पूपा[3] स्वरूपं तिरोदधे। किन्तु पापेन तापेन प्रत्युत प्रबलीकृतं पीडापाण्डित्यम्। अननुभूतपूर्वा सपत्राकृति[4] शरीरे भवितु लग्ना। ऋते नमस्कारमहामन्त्रान्न चलति कोऽपि वाह्योपचारो व्रतिना रात्रौ। पुनः पुन पार्श्वे परावर्त्तयतस्तस्य प्राप्तरयोऽप्यद्यतनसमयो मन्थरता स्वीकृत्येव नहि कथमप्यग्रत ससार। व्यतीते पूर्वरात्रे प्रसह्य भिक्षुणा प्रेरिता केचन मुनय शयनाधीना वभूवु। भिक्षुसेवार्थमुपविष्टोऽपि कश्चिन्निद्रया प्रणामकर्त्तेव भूयो भूयो नतकन्धरो वभूव।

'हन्त! कि मयाऽतीतेऽनेहसि[5] प्रचण्डमीदृक् पापमाचरितं येनेदृशाऽर्त्तिकरेण ज्वरेण वाढं पीड्येऽहम्' इति सस्तारके शयानेन भिक्षुणा व्यचिन्ति। नाऽकृत कर्म कदापि वेद्यते सवेदनशीलेनाऽऽत्मना, इति पर्यालोचयतस्तस्य झगिति श्रावकाणा लसन्निरवद्य-रचना वचनावलि स्मृतिपथमवतीर्णा।

अहह! भद्रा इमे शास्त्रज्ञा मातृपितृ-सधर्माण[6] श्रावका न

---

१. निर्दयम्। २ प्रत्यक्षेपणमकारि। ३ सूर्य.। ४ तीव्रा वेदना।

शब्द के साथ वमन हो रही थी। जीभ ने जब अस्वाद-व्रत को धारण कर लिया तो अपने अपमान से मानो कुपित होकर भूख उदर स्थान का परित्याग कर कही हवा खाने के लिए चली गई। तप्त-शिला के समान पानी को अन्दर प्रवेश कराने के लिए असमर्थ होते हुए भी भिक्षु के होठो को सुखाती हुई प्यास पुन पुन जल माँग रही थी। हृदय ग्लान एव मुख म्लान हो रहा था। उनके शरीर के सब अग प्रत्यग टूट रहे थे। शय्या के चारो तरफ बैठे हुए चिन्ता-ग्रस्त सारे मुनि यथा-शक्य उपचार और परिचर्या कर रहे थे।

प्रत्यक्ष शास्त्रो का आलोक होने पर भी जिसने भगवदाज्ञा की अवज्ञा कर दी, उसका मुँह देखने से क्या ? मानो इसी रोष से सूर्य ने अपना स्वरूप तिरोहित कर लिया। किन्तु धूर्त ताप ने पीडा को और उग्र बना दिया। जिसका पहले कभी अनुभव नही किया था, ऐसी भयकर वेदना शरीर मे होने लगी। नमस्कार महामन्त्र की स्मृति के अतिरिक्त रात्रि मे साधुओ के कोई बाह्य उपचार नही चल सकता। बार-बार करवटे बदलते हुए उनका अति वेगवान समय भी मानो मन्दगति को धारण कर किसी भी प्रकार आगे नही बढ रहा था। प्रथम प्रहर बीत जाने पर भिक्षु के बहुत कहने के बाद कुछ साधु निद्राधीन हो गए। भिक्षु की सेवा मे बैठा हुआ भी कोई साधु निद्रा-वश प्रणाम-कर्ता के समान बार-बार सिर नमाता हुआ झपकी ले रहा था।

"खेद ! मैने विगत काल मे ऐसा क्या प्रचण्ड पाप कर्म किया था कि इतनी भयंकर पीडा देने वाली बुखार से पीडित हो रहा हूँ" यह बिस्तर पर लेटे हुए भिक्षु ने चिन्तन किया। सवेदनशील आत्मा कभी बिना किए कर्मो का वेदन नही करती, ऐसा पर्यालोचन करते हुए सहसा श्रावको की निरवद्य वचनावलि उनके स्मृति-पटल पर आ गई।

अहो ! इन भव्य माता-पिता के समान हितेच्छु शास्त्रज्ञ श्रावको ने क्या

---

५. समये। ६ मातृपितृतुल्या।

मा कि यथार्थमुपदिदिशुः। प्रत्यक्षमात्मगुणपरिमोपिणो दोपान् न कि ज्ञायं ज्ञाय सेवामहे वयम्।

वत! वत! कि कथनम्! कि करणम्! हहा! नितरा वद्धा वन्ध-द्वयेन वयम्। मुतरा संतप्ता गौरव-त्रिकेन पुन.। कलुपयति च कपाय-चतुष्टयी जीवनचर्यामस्माकम्। प्रतिपल प्रयतामहे पूजा-श्लाघा-वर्णश्लोकादिहेतवे। न रक्तमद्यावधि वास्तविक-वैराग्य-रङ्गेणाऽस्मद्हृदयम्। मिश्र-भापा-व्यामिश्र द्वयर्थक-काव्यमिव श्लिष्ट क्लिष्टं च परिस्फुरति प्रायोऽस्माक वचनम्। न श्रेष्ठा प्रतिभाति वहुशोऽस्मदीया कायिकी चेष्टा।

हन्त! वयमेव कि विपगर्भा पयोमुखाः कुम्भा? वयमेव कि तिरस्करिण्या[1]तिरोहिता जीवन-शून्याः[2] कूपा? वयमेव किमु सर्वभक्षिणो मुनिरूपेऽपि वन्हि-प्रतिरूपा। क्व तेपा शम-सरोवर-निमग्नाना संतत-सविग्नाना भवोद्विग्नाना मुनीना क्रिया? क्वास्माक कृत-वाह्यक्रिया-कलापानामनुपशमितसंतापाना पुनरन्त-पापाना प्रक्रिया? वेष-परिवर्त्तने जायत एव किं यावन्नहि चेतश्चौर्यमुत्सृजति। धृतसौवर्ण-चाकचिक्यमप्यारकूट[3] किमर्हति-तरामष्टापदपदवीम्[4]? दुग्धधवलोऽपि वक. कि कलयति कलहस-कलितं ललित कोशलम्? वर्णवन्धुरमप्यसुरभि रोहितक-प्रसून-कदम्वकं[5] किमनुहरति परिस्फुरन्मत्त-मधुकर-गुञ्जारव-मञ्जुला सौरभदान-सुवासित-हरिदन्तरा विकचा पाटल-कुसुमावलिम्?[6]

ह ह ह!! शास्त्रीयमेकाक्षरमप्यर्थतो मात्रातो वा परावर्त्तित-मनन्तकाल-परिभ्रमणहेतु-भवतीति भगवदुक्ति। मया सम्यक् तत्त्व श्रद्धतापि लोचने निमील्यान्धकार प्रसारितम्। अनेके यथार्था

---

१. जवन्धा-'कनात इति भापायाम्। २ जलशून्या। ३. पित्तलम्।

मुझे यथार्थ बोध नही दिया था ? प्रत्यक्ष आत्म-गुणो को दवाने वाले दोपो का क्या हम जान-बूझ कर सेवन नही करते ?

वस, वस ! कहना कुछ है ! करना कुछ और ही है ! हा ! हम सदा राग द्वेप रूप दो वन्धनो ने वँधे हुए हैं, तीनो गौरवो (अभिमानो) से मदा सतप्त रहते हैं और चारो कपाय हमारी दिनचर्या को कलुपित वनाते रहते हैं। पूजा, प्रशसा और कीर्ति आदि के लिए प्रतिपल प्रयत्नशील रहते है। आज तक वैराग्य के वास्तविक रग से हमारा हृदय रगा नही गया है। हमारा वचन प्राय द्वयर्थक-काव्य की तरह श्लिष्ट, क्लिष्ट एव मिश्र भापा से मिश्रित होता है। कायिक चेष्टा भी कोई हमारी वहुत अच्छी नही है।

हन्त ! हम ही क्या अन्दर विप और मुँह मे दूध वाले घडे है ? हम ही क्या ऊपर से ढके हुए जीवन-(सलिल) शून्य कूए हैं। हम ही क्या मुनि के रूप मे सर्वभक्षी आग के प्रतिरूप है। कहाँ उन शान्ति-सरोवर मे निमग्न, सदा विरागी और ससार से उद्विग्न रहने वाले मुनियो की क्रिया और कहाँ अनुपशान्त ताप वाले हम वाह्यक्रिया-काण्डियो की छुपी हुई पापो की प्रक्रिया ? वेप-परिवर्तन से होता ही क्या है ? जब तक चित्त धोखेवाजी को नही छोड देता ? स्वर्ण की-सी चमक धारण करने पर भी क्या पीतल कभी सोने का मूल्य पा सकता है ? दूध के समान उजला वगुला भी क्या कभी हस के ललित कौशल को प्राप्त कर सकता है ? रूप से रम्य होने पर भी सुरभि-विहीन रोहितक (रोहिडे) के फूलो का समूह, क्या उडते हुए मत्त-मधुकरो के गुञ्जारव से मजुल और सुरभि दान से दिगन्तो को सुवासित करने वाले विकस्वर गुलाव के पुष्पो की समानता कर सकता है ?

अहो ! शास्त्र का एक अक्षर भी अर्थ से या मात्रा से परिवर्तित किया हुआ, अनन्त काल तक परिभ्रमण का हेतु वन जाता है, ऐसा भगवान का कथन है। सम्यक् तत्व का ज्ञान रखते हुये भी मैंने आँख मीचकर अन्धकार फैला दिया। अनेक यथार्थ अर्थों को गुरु के पक्षपात मे पडकर विपरीत

४ स्वर्णपदवीम्। ५ रोहितक प्र०—रोहिडे के फूलो का समूह, इतिभापा। ६. पाटल—गुलाव के फूल, इतिभापा।

अर्था गुरु-पक्षपातेन वैपरीत्यमानीता.। तर्क-सपर्कतस्तान् विघटनोयानपि सुघटा प्रापिता । कृत-तत्त्वच्छेदाया स्वकीय-मेधाया अप्युपरि गर्वितोऽहमभवम् । धिग् ! धिग् !! चेन्मम प्राणा अस्मिन् समये परत्र यायिनस्युस्तदा मम का गति.? कम्पयते सा मा विभोर्वाणी यद् 'नग्न कृशो मासान्ते भुञ्जानोऽपि माययाऽनन्तशो गर्भाया-ऽऽगच्छतीति'।

हन्त ! किमत पर पुन प्रभुर्वक्ति यथा—"मायी मिथ्यादृष्टिरथा-ऽमायी सम्यग्दृष्टि" रिति । कि किलैकविरुद्धप्ररूपणया नानन्त-ससारमङ्गीचकार 'सावद्याचार्य' सज्ञया वित्त ! कमलप्रभाचार्यः ? अथवा न कि निमज्जयति गुरुतर पोतमपि जायमान सूक्ष्ममप्येक रन्ध्रम् ? नि शङ्कमह बहु-विरुद्ध-प्ररूपणा-प्रवणोऽधुनैव मरणमाप्त-स्तैरञ्ची, नैरयिकी गति वा समासादयेयम्, तत्र गुरु. कि भविता रक्षिता ? छद्मसद्मस्था कि मे वाक्चातुरी त्रायिनी भाविनी तत्र !

अहो ! ऋजुमतय. श्रावकास्तु मत्प्रतिवचनमश्रद्धधाना अपि हृदा मा वैराग्यभाज प्रतियन्तस्त्रिकृत्व पाठेनाऽशठतया ववन्दिरे। तद्वन्दनाऽनर्होऽपि ता स्वीकारयन् कियतीमात्मवञ्चना कृतवानहम् ।

हहा ! पृथुलतमपातकाना तातो विश्वासघातोऽपि न मया व्यधायि किमुत तेपा विश्वस्त-मानसेन सार्धम् ? उभयो सन्ध्ययो प्रतिक्रमणमारचयन् पड्वार प्रत्याख्याय सावद्य-योगान्, तत्रैव दिने न जाने कतिधा सावद्यकार्याणि करोमि, कारयाम्यनुमोदयामि चाहम्। भग्ने ह्येकस्मिन्नपि व्रतेऽनङ्गीकुर्वस्तत्प्रायश्चित्त नूनमनाराधक-पदवी लभतेऽल्प-सत्वो जनः । तदाऽनेक-महाव्रत-भञ्जकस्य मम कीदृशी गतिर्भाविनीति भगवानेव जानाति ।

---

१. व्यात.।

प्ररूपित कर दिया। तर्क के सम्पर्क से जो विघटित हो जाए उन्हे भी मैने सुघटित कर दिया। तात्विकता को नष्ट करनेवाली अपनी मेधा पर भी मै गर्वित होगया। धिग् धिग्! इसीसमय मेरे प्राण अगर परलोक-गामी वन जाए तो मेरी क्या गति हो? भगवान् की वह वाणी मेरा हृदय कम्पित करती है। "नग्न, कृश और मास मे एकवार खाने वाला भी माया के चक्कर मे गिरकर अनन्त जन्मो की वृद्धि कर लेता है।" खेद! इससे ज्यादा क्या हो? भगवान फिर कहते है—"मायावी मिथ्यादृष्टि और अमायावी सम्यग् दृष्टि होता है" सावद्याचार्य नाम से प्रसिद्ध कमलप्रभाचार्य क्या एक विरुद्ध प्ररूपणा करके अनन्त ससारी नही वने थे? एक छोटा-सा छेद भी क्या विशाल पोत को नही डुबा देता?

वहुत-सी विरुद्ध प्ररूपणा करने वाला मै यदि अभी मृत्यु को प्राप्त होऊ तो नि सन्देह तिर्यक् या नरक गति मे जाऊँ? वहाँ क्या गुरु मेरी रक्षा करेंगे? या छलमयी मेरी वाक्-पटुता परित्राण करेगी?

अहो! सरलमति श्रावको ने तो मेरे उत्तरो को यथोचित नही समझते हुए भी हृदय से मुझे वैराग्यवान् मानकर तिक्खुत्तो के पाठ से ऋजुता-पूर्वक वन्दना की, उस वन्दना के योग्य न होते हुए भी उसकी पात्रता स्वीकार करते हुए मैंने कितनी आत्म-वञ्चना की?

ओहो! उनके विश्वस्त मानस के साथ क्या मैंने वहुत से पापो का जनक विश्वासघात नही किया? दोनो सन्ध्याओ मे प्रतिक्रमण करता हुआ, छ वार सावद्य (पापमय) योगो का प्रत्याख्यान करता हुआ, उसी दिन न जाने कितनी बार सावद्य कार्य करता हूँ, करवाता हूँ और करने वालो का अनुमोदन करता हूँ। एक भी व्रत के खण्डित होने पर उसका प्रायश्चित्त न करता हुआ अल्प-सत्त्व प्राणी विराधक पद पाता है। तब अनेक महाव्रतो के विराधक मेरे जैसे की क्या गति होगी, यह सर्वज्ञ ही जानते हैं।

बत ? बत ? किं तेन वृथा मस्तिष्क-भार-रूपेण ज्ञानेन, येन नहि याथार्थ्यमाचर्यते ? न किं अपास्पदमिदम्—यन्मस्तकस्थे सवितरि[1] सनेत्रोऽप्यन्त कूप पतति ? जागरूकेऽखिले परिजने तस्करै सर्वस्व-मपह्रियते ? भगवन् ! किं करोमि ? क्व गच्छामि ? हन्त ! जीविता मक्षिकापि भक्षिता !

एवं वाह्यतीव्रतापेन कम्पमानशरीरस्य तस्य विमर्शन-परस्य पापानुतापेन हृदयमपि कम्पितमभूत् ।

(पुन किञ्चिद्धैर्यमालम्ब्य) यज्जात तज्जातमेव, केवल तच्चिन्तया न किमपि प्रत्यावलते ऋते पश्चात्तापम् । साम्प्रत किं कार्यं मयेति सपदि निर्णेयम् । किमनयैव पद्धत्याऽऽत्मवञ्चना कार्या, उत[2] दुर्गमो दुराराध्यो महापुरुषैराचीर्णोऽध्वा स्वीकर्तव्य ।

नहि, नहि, न मयात्म-विप्रलम्भनाय गार्हस्थ्यमुज्झितम् । नास्माक गृहे किमपि नैयून्यमासीदुचित-सामग्र्या । अग्र्या भोगा अपि सुलभा आसन् । तथापि धर्माराधनधिया निश्छल व्रतोपपत्तिरकारि सुस्थिर-मानसेन । अत्रागत्यापि चेन्न विहित स्वरूपसाधन तदा केवल नेपथ्य-परिवर्त्तनेन जातमेव किम् ?

नून स एव धीमता धुर्यो यो दृष्टि-विपर्यासतो वहुमूल्य मत्वा गृहीतमपि मणि चेद् राढामणिरयमिति[3] पश्चादवसित स्यात्, तदा न किं त त्यक्तु कृतत्वरो भवेत् ?

न जानेऽय तीव्रतापोऽपि चेन्मम पापोपशमनायैव समागत स्यात् । न किमक्षिवेदना-निपीडितेन मार्गदर्शनमकारि सत्वरम-नाथमुनिना ? असह्य-दावज्वरार्त्ति-निपीडितस्यैव नमि-राजर्षे र्वलयध्वनिरेकत्वभावना प्रवलीचकार । वृद्ध-ग्लान-कुणपादि-निभाल-

१. सूर्ये । २ उत वितर्के । ३ काचमणिरयमिति ।

बस ! बस ! मस्तिष्क के व्यर्थ भार-रूप उस ज्ञान का क्या अर्थ, जिससे वास्तविक आचरण नही हो पाता ? क्या वह लज्जास्पद नही है कि सिर पर सूर्य होने पर भी आखो वाला आदमी कुए मे गिरे, सारे परिवार के जागते हुए भी चोर सर्वस्व का अपहरण करे ? भगवन् ! क्या करूँ ? कहाँ जाऊँ ? मैंने तो जिन्दा मक्खी निगल ली ।

इस तरह बाह्य तीव्र ताप से कम्पित शरीर वाले उन भिक्षु के पाप के अनुताप से हृदय भी प्रकम्पित हो गया ।

(फिर कुछ धैर्य धारणकर) जो हो गया सो हो गया केवल उसकी चिन्ता करने से पश्चात्ताप के सिवाय कुछ भी वापिस आने का नही । अब मुझे क्या करना है ? इसका शीघ्र निर्णय करना चाहिए । क्या इसी तरह आत्म-वचना करनी चाहिए, अथवा महापुरुषो के द्वारा अगीकृत दुर्गम और दुराराध्य पथ को स्वीकार करना चाहिए ।

नही, नही मैंने आत्म-वचना के लिए गृहस्थावास नही छोडा है । हमारे घर मे उचित सामग्री का कोई अभाव नही था । अनुत्तर भोग भी सुलभ थे । फिर भी धर्म-आराधना की बुद्धि से निश्छल-वृत्तिपूर्वक, सुस्थिर मन से, सयम स्वीकार किया था । यहा आने के बाद भी यदि आत्म-साधना नही की तो केवल वेष-परिवर्तन से हुआ ही क्या ?

वास्तव मे वही बुद्धिमानो का शिरोमणि है जो दृष्टि-विपर्यास से बहुमूल्य मानकर ग्रहण किए हुए काचमणि को, यथार्थता जानने पर छोडने के लिए उतावला हो उठे ।

क्या पता यह तीव्र ज्वर भी अगर मेरे पाप-शमन के लिए ही आया हो ? क्या नेत्र-वेदना के माध्यम से अनाथ मुनि ने मार्ग-दर्शन नही पाया था ? चूडियो की ध्वनि ने असह्य दाघज्वर की पीडा से उत्पीडित नमिराजर्षि की एकत्व-भावना को प्रबल बनाया था । वृद्ध, ग्लान और शव को देखकर

नादेव न किं प्रवुद्धाशयोऽभूत् शौद्धोदनिः ! सघर्षो हि जीवने किमपि सद्यस्कतामाविर्भावयति । चण्डांशुना दन्दह्यमानो हि जीवलोकस्तप्ति-हरं मुदिरमाकारयति[1]। विपदो हि मूल्याङ्कनं विदधति सपदाम्, किन्तु न सपदो विपदाम् । अपटुरेव पणायति[2] सहृदयमगदकारम् । मरवो[3] हि विदन्ति सुतरां क्षीरमिव व्याप्रियमाणं नीरम् ।

अस्तु, उपशान्तेऽस्मिन् वोधदान-प्रवरे ज्वरे निश्चितमह तत्त्व-गवेषणां विधास्ये समुपासिष्ये च प्रवचनानुसारिणी पद्धतिम् । वितथयन् दृष्टिराग-निवन्धनानि गुर्वादीना वाह्यवन्धनानि, केवलं वीतरागशासनसंवन्धमेव निर्वन्धं निर्वाहयिष्ये ।

एवं विमृशतस्तस्य क्रमशः क्षणदा[4] तापेन पापेनापि क्षीणा क्षणवती[5] विलक्षणा व्यतीता । नीता सम्यक् सम्पादित-स्वकार्येणेव ज्वरेणाप्यस्तसंज्ञा । नामयव्रातं जातं किमपि प्रभातेन । किन्तु भिक्षो-र्हृदि तदिदं सुप्रभातमन्यादृगेव प्रतिभातम् । अद्यतनो भानुमान् हि वस्तुवृत्त्या भानुमानिति[6] प्रतिपन्नमस्याऽऽलोकितमानसेन ।

प्रातः प्रतिक्रमणवेलायां सर्वेऽप्यनुगामिनो मुनयः स्वमुख्य[7] सौख्यं पप्रच्छुः—"स्वामिन् ! इयं व्यतीता शर्वरी न वरीयसी व्यतीता तीव्रज्वरतप्तानां भवताम् । कथमेतादृग् ज्वरो वद्धपरिकरोऽभूद् हितमितभुञ्जानानां श्रीमतां शरीरे ? किमु लयमागतमुहूर्त्तमपि पश्चिम-यामिन्यामक्षि यौष्माकम् ? साम्प्रतं कीदृशी स्थितिरासेव्यते सर्व-तनुशक्ति-घस्मरेण ज्वरेण ? किमौषधं सेवनीयमिति विदितु-मिच्छामो भवदिच्छाम् । केन वैद्यराजेन द्रष्टव्यं भवतां रत्नकरण्डक-मिव रक्ष्यं वपुः ?" एवमनेकैः प्रश्नैरनुगामिमुनयः स्वगुरुं किमपि वक्तुं प्रेरयामासुः ।

---

१. मुदिरो मेघः तम् । २. प्रशंसां करोति । ३. मरुस्थल-वासिनः । ४ रात्रिः । ५. उत्सववती । ६ सूर्यः । ७ भिक्षुमित्यर्थः ।

ही महात्मा बुद्ध प्रबुद्ध हुए थे। संघर्ष जीवन मे कुछ नवीनता लाता है। सूर्य की प्रचण्ड किरणो मे सन्तप्त जीवलोक ही उत्ताप को दूर करने वाले मेघ का आह्वान करता है। विपत्तिया ही सम्पत्ति का मूल्याकन करती है, न कि सम्पत्ति विपत्तियो का। रोगी ही वैद्य की सराहना करता है, मरुस्थल-निवासी ही दूध की तरह उपयोग मे आने वाले पानी का महत्व आकते है।

अस्तु, इस बोधदायक ज्वर के उपशान्त होने पर मैं निश्चित ही तत्व-गवेषणा करूगा और आगम सम्मत पथ अपनाऊगा। गुरु आदि के बाह्य-बन्धन जो दृष्टि-राग के कारण है, उन्हे झुठलाते हुए केवल वीतराग शासन का सम्बन्ध ही मुक्त होकर निभाऊगा।

इसप्रकार चिन्तन करते हुए उनकी रात्रि क्रमश ताप से एव पाप से क्षीण होती हुई विलक्षण उत्सव रूप से व्यतीत हुई। मैंने अपना कार्य अच्छी तरह कर दिया मानो इस आस्था से ज्वर भी चला गया। सुबह किसी रोग का निशान भी नही रहा। किन्तु भिक्षु-हृदय को वह सुप्रभात दूसरी ही प्रकार का आभासित हुआ। 'आज का सूर्य ही वस्तुत प्रकाशमान है' यह उनके आलोकित मानस ने माना।

प्रात. प्रतिक्रमण के समय सब अनुगामी साधुओ ने सुख-पृच्छा की—"स्वामिन्! यह गई रात्रि तीव्र ज्वर से सतप्त होने के कारण आपकी अच्छी नही बीती। हित और परिमित भोजन करने वाले आपके शरीर मे ऐसा भयकर ताप कैसे आया? क्या पश्चिमरात्रि मे थोडी देर के लिए भी आपकी आख लगी? शरीर की सब शक्ति का भक्षक बुखार अब कैसे है? क्या औषधि लेंगे? आपकी इच्छा हम जानना चाहते है, रत्न पेटिका की तरह रक्षणीय आपके शरीर को कौन से वैद्यराज को दिखाए?" ऐसे अनुगामी मुनियो ने अनेक प्रश्नो के द्वारा अपने गुरु को कुछ बोलने के लिए प्रेरित किया।

किमपि नवीन भाववैभव विभ्रती भैक्षवी ब्राह्मी[1] व्यक्ताक्षरा वभूव—"आयुष्मन्त ! वहुवरोऽस्मि साम्प्रत द्रव्यतो भावतश्च । पाप इति कल्पितोऽपि ताप किमप्यन्तरङ्गमुपतापमहरदिति मे मति. । जवेन स्वकार्य सुन्दरतया विरचय्य स गात्रवाभासो[2] जीर्णता गत । 'यद्भवति तच्छ्रेयसे' इति मतिमतामुक्ति. किमपि तत्वमवश्य मावहतीति मे प्रत्यय । अलमितरौषध-सेवनेन तेनैवौपधायित मद्वर्ष्मणि[3] । शनकै पूर्णस्वास्थ्य लप्स्येऽह पथ्य-सेवनेनैव । आरोग्य-वोधिलाभप्रदो नापरो वैद्यवरिष्ठो वरीवर्त्ति वसुधातले ऋते चरमतीर्थराजम् । तच्छिक्षानुगमनमेव सर्वाङ्गीण चात्यन्तीन-मामोपशमनम्[4] ।"

विस्मयमानैर्नहि कैरप्यनुगमुनिभिर्भिक्षु भारत्या भावोऽवागामि[5] सम्यक्तया । कामप्यगम्या शैलीमनुशीलयतितरामत्रभवतामद्य परि-कल्पितविभाषा भाषा, इतीवानुभूत तैं ।

स्तवकितपाणिपल्लवैर्नावगत किमपीति स्पष्टयितु पुन प्रेरिता भिक्षुस्वामिन ।

'स्वतोऽवगम भविष्यति साम्प्रतं प्रतिक्रमितव्यम्, व्यत्येति समय' प्रेरित सरहस्य भिक्षुस्वामिभि ।

उदित-देशीये दिनकरे श्राद्धा श्राद्धयोऽपि गुरुदर्शनार्थमागन्तु प्रवृत्ता सोत्साहम् । सर्वेऽपि सुख प्रश्नयन्तो ज्वर-विषये परीपृच्छ्य-न्ते स्म, केवल वर वरमित्युत्तरयन् भिक्षुस्तान् विससर्ज ।

इति श्री चन्दनमुनि-विरचितेऽभिनिष्क्रमणाख्ये
महाकाव्ये गद्यप्रबन्धे नवम समुच्छ्वास.

---

१ वाणी । २ अमित्रावभास । ३ मच्छरीरे । ४. रोगोपशमनम् । ५ अवगत ।

कोई नवीन भाव वैभव को धारण करती हुई भिक्षु की वाणी प्रस्फुटित हुई—"आयुष्मानो ! अव मैं द्रव्य और भाव दोनो से वहुत अच्छा हूँ। जिस ताप को पाप माना था उसने कोई अन्तरग उपताप को दूर किया है, ऐसा मुझे अनुभव हुआ। शीघ्रता से अपना कार्य सम्यक्तया करके वह शत्रु के समान दीखने वाला ज्वर जीर्ण हो गया है। "जो होता है वह शुभ के लिए होता है" यह वुद्धिमानो की उक्ति कोई तत्त्व अवश्य वहन करती है, ऐसा मेरा विश्वास है। दूसरी औषधि सेवन से क्या मतलव ? उसने ही मेरे शरीर मे औषधि का काम कर दिया। पथ्य सेवन से ही धीरे-धीरे मे पूर्ण स्वस्थ हो जाऊंगा। आरोग्य वोधि-लाभ को देने वाले चरम तीर्थंकर के सिवाय वसुधातल पर कोई दूसरा वरिष्ठ वैद्य नही है। उनकी शिक्षा के अनुसार चलना ही सर्वाङ्गीण एव आत्यन्तिक रोग का उपशमन है।"

आश्चर्य करते हुए अनुगामी मुनियो मे से किसी ने भी भिक्षु की गूढ वाणी का रहस्य अच्छी तरह नही समझा। उन्हे लगा कि आज इनकी रहस्यमयी भाषा किसी अगम्य शैली का अनुशीलन कर रही है।

वद्धाजलि होकर "हम कुछ भी नही समझे" यो पुन. स्पष्टीकरण के लिए भिक्षु स्वामी को प्रेरित किया।

"अपने आप पता लग जायगा, अभी प्रतिक्रमण करो, समय वीत रहा है" यो रहस्य-पूर्वक भिक्षु स्वामी ने कहा।

सूर्योदय जव निकट था तव श्रावक-श्राविकाए भी गुरु-दर्शन के लिए सोत्साह आने लगी। सवने ही सुख प्रश्न करते हुए ज्वर के विषय मे पूछा। ठीक है, ठीक है' यह उत्तर देते हुए भिक्षु ने सवको विसर्जित किया।

## नौवा समुच्छ्वास समाप्त



## दशमः समुच्छ्वासः | ★

'अनुस्रोत प्रस्थिते वहुजने' इत्यार्हती सूक्तिः किमपि नव्यनिर्मातु-मिच्छुभिरनुभवेन यथार्थान्विभावि। अत्यर्थमध्वन्य-पद-क्षुण्णे[1]ऽध्वनि गताक्षोऽपि गन्तुमर्हः, किन्तु नव्यपथनिर्माणेऽतर्कित काठिन्यमभिमुखो-नमापतति। अनेकशः परिवर्धितपाथःपूरपरिप्लाव्यमानवन्धा महानद्यः पथानमवरुन्धन्ति। त्रिकालेऽप्यविदितनमन-महात्म्या अखर्व-गर्वोन्नतकन्धरा शिलोच्चया[2] वर्धमानमध्वानमधिक्षिपतितमामनायासम्। तत्र कश्चित् सुपरिशीलिताऽऽधुनिकविज्ञानपद्धतिरतुच्छ-परिश्रमी 'कार्यं साधयामि वा देहं पातयामि' इति कृतनिर्णयोऽति-तीक्ष्णकर्मकारी सुसाफल्यं वृणुते। अल्पसत्त्वास्तु कयाचित् प्रतिकूल-प्रतिक्रियया विपरीत-वातावरणैश्च सहसैव साहसं त्यजन्ति, वितथयन्ति श्रमेण सार्धं व्ययमपि, सहन्ते च दारिद्र्यजन्या दुरवस्थाम्।

'कथं क्रान्तिमयः पदन्यासः कार्यः' इति चिन्तनशीलस्य भिक्षोः समीपमायातास्ते व्रजलाल-जवाहिरलालाद्या इङ्गितज्ञाः श्रावकाः। तीव्रज्वराक्रमणेन शैथिल्यमाप्तेऽपि भिक्षोर्मुखारविन्दे ते कामप्यननुभूत-पूर्वां तेजोमयीं भावभङ्गीमभ्यूहाञ्चक्रिरे। भ्रूविक्षेपैः किमपि सूचयन्त इव ज्वराक्रान्तानामस्ति सांप्रतं सुखमिति सोत्प्रासं प्रश्नयामासुः।

---

१. भृशपान्थ-पद-क्षुण्णे। २ पर्वताः।

## ★ | दसवां समुच्छ्वास

"वहुत लोग अनुस्रोत मे वहने वाले है।" इस आगमिक उक्ति को कुछ नया निर्माण करने के इच्छुको ने अनुभव से यथार्थ पाया। वहुत से पथिको के पदाक्रान्त मार्ग पर अन्धा भी चल सकता है, किन्तु नये पथ के निर्माण मे अकल्पित कठिनाइयाँ सम्मुख उपस्थित हो जाती है। वढे हुए पानी के पूर से वाधो को भी वहा ले जाने वाली महानदियाँ पथ मे अनेक वार रुकावटे डालती हैं। तीन काल मे भी जिन्होने नमन के महात्म्य को नही समझा, वे अत्यन्त गर्व से सिर उठाए हुए पर्वत, वढते हुए पथिक का अनायास मार्गावरोध कर देते है। वहा कोई आधुनिक विज्ञान-पद्धति का अत्यन्त निष्णात और प्रचुर परिश्रमी ही 'कार्य सिद्ध करू अथवा देह का विसर्जन करू' का निर्णय करके वहुत कठोर परिश्रम करने वाला ही सफलता का वरण करता है। अल्पसत्व मनुष्य तो किसी प्रतिकूल प्रतिक्रिया और विपरीत वातावरण से सहसा ही साहस छोड देता है, श्रम के साथ व्यय को भी व्यर्थ वना देता है और दारिद्र्य-जनित दुरवस्था को सहन करता है।

कैसे क्रातिकारी कदम उठाने चाहिए? ऐसा विचार करते हुए भिक्षु के पास वे इगित को समझने वाले व्रजलाल, जवाहिरलाल आदि श्रावक आये। तीव्र ज्वर के आक्रमण से भिक्षु का मुखकमल कुछ मुरझाया-सा होने पर भी उन्होने अननुभूतपूर्व तेजोमयी भाव-भगिमा देखी। भ्रू-विक्षेपो के द्वारा कुछ सूचना-सी देते हुए "आपके ज्वर आ गया था, अव सुखसाता है" यो सस्मित प्रश्न किया।

'सुख किम्, असुख हि नष्टम्' इति सस्मितमुदतारि भिक्षुणा ।

कि कि कथ कथमिति ससम्भ्रम पृच्छाप्रह्वेषु तेषु "मध्याह्ने विजनोपासना कार्या" इति स सकेतयामास तान् ।

किमपि भव्य नव्यमिति निश्चिन्वाना स्वसदनमाजग्मुस्ते ।

मध्याह्ने कौतुहलतया सदिग्ध-हृदया श्रमणोपासका ममील्यैकान्ते भिक्षुस्वामिनमुपससरु[1] । विहितवन्दनादिविधय सम्मुख निषेदिवास । किं नवीनमिति शुश्रूषया श्रवौ सपुटयामासु ।

ग्लानिमनुभवतेव स्वामिनाऽजल्पि—"श्रावकाः ! त्रपतेतमा कृतसत्यापलपन मे लपन[2] पुन युष्माकमग्रतो यथार्थ व्यञ्जयितुम् । गुरुभिया ह्रिया वाऽलम्, यदि मत सत्यमेव जीवन-सर्वस्वम् । नहि सत्यव्यतिरिक्ताऽऽसीदातुर प्रति भिषगाचार्यस्येव यौष्माकीणा पावनप्रेरणा । गुरु-गुरुमोहवशवदेन जानतापि मयाऽपह्नोतु[3] प्रायासि सा ।

स्मरामि, विद्यागुरो. सकाशादागमानामध्ययनकाले भवतामिव मे हृदयमपि विचिकित्सितमभूत्[4] । [5]अप्राक्षमहमपि शास्त्रोक्ति परामृशन् समीचीनामाचार-सहिताम् । यथा—गुरुवर्य ! न कथमद्यश्वीया[6]ऽस्माकमाचारपरम्परा शास्त्रै सह सगच्छते ! जल्पनमिव कल्पन नास्ति, तथैव कल्पनमिव जल्पनमपि । अक्षतेन्द्रियकेतनमपि[7] विगतचेतन सयमकरण[8] कियत्कालमुत्पन्नाऽसड्ख्यदोष-कृमिकुल-सकुल प्रसर्पद्दुर्गन्ध न भावि ? परन्तु, दुषमारखलायित सहनन-दौर्बल्य च निरूपयता गुरुणा कथकथमपि मच्छङ्का व्यपानायि, तदनुसार मयापि युष्मत्पृच्छानामुपरि पटाक्षेपो व्यधायि । किन्तु, ह्यस्तनेऽहनि सर्वाङ्गीणेनातितीक्ष्ण-तापेन पावकेन स्वर्णस्येव

---

१ उपाजग्मुः ।　२. मुखम् ।　३ वाग्जालेन तिरोहित कर्त्तुम् ।

"सुख क्या, सब दुख ही नष्ट होगया" मुस्कराते हुए भिक्षु ने उत्तर दिया।

क्या-क्या, कैसे-कैसे ? यो बहुत उत्सुकता से पूछने पर "मध्याह्न मे एकान्त सेवा करना" उनको सकेत दिया।

कुछ नया भव्य चिन्तन होगा, ऐसा निश्चय कर वे अपने-अपने घर चले गये।

मध्याह्न मे कुतूहल से वे सशयशील श्रावक एक साथ मिलकर भिक्षु स्वामी की सेवा मे आए। वन्दना आदि करने के बाद सम्मुख बैठे। क्या नवीन तथ्य निकलता है ? यह सुनने के लिए उनके कान लालायित हो रहे थे।

ग्लानि का-सा अनुभव करते हुए भिक्षु स्वामी ने कहा—श्रावको ! जिस मुख से मैंने सत्य का खण्डन किया था, अब तुम्हारे आगे पुन उसी मुख से सत्य को व्यक्त करते हुए मुझे लज्जा महसूस हो रही है, यदि सत्य को ही जीवन का सर्वस्व मान लिया है तब गुरु के भय से या लज्जा से क्या मतलब निकलेगा ? रोगी के प्रति वैद्यराज की जैसी प्रेरणा होती है वैसी ही सत्य के प्रति तुम्हारी पावन प्रेरणा थी। गुरु के महामोह के वशीभूत होकर जानते हुए भी मैंने उसको छिपाने का प्रयास किया।

याद आता है विद्या-गुरु के समीप आगमो का अध्ययन करते समय तुम्हारी तरह मेरा भी हृदय शकित हुआ था। मैंने भी शास्त्रो के कथन पर विमर्शन करते हुए समीचीन आचार-सहिता के लिए पूछा था। जैसे कि गुरुवर्य ! आजकल की हमारी आचार-पद्धति शास्त्रो से सगत क्यो नही होती ? जैसे कथन के अनुरूप आचरण नही है, वैसे ही आचरण के अनुसार कथन भी नही है। चैतन्य शून्य शरीर की भान्ति हमारा सयम असख्य दोप-कृमियो से सकुल कहा तक दुर्गन्ध फैलाने वाला नही होगा ! परन्तु दु पम काल की खलता और संहनन की दुर्वलता का निरूपण करते हुए गुरु ने जैसे-तैसे मेरी शका पर लीपा-पोती कर दी। उसी का अनुसरण करते हुए मैंने भी तुम्हारे प्रश्नो पर पर्दा डाल दिया, किंतु कलकी सर्वाङ्गीण अति तीक्ष्ण ताप ने, आग के द्वारा तपे हुए सोने की तरह मेरी आन्तरिक कालिमा नष्ट

४. सशयितम्। ५ पृष्टवान्। ६ आधुनिकी। ७ अक्षतशरीरमपि। ८. सयमरूपशरीरम्।

तातप्यमानस्य मेऽन्त श्यामिका नष्टा, विवेकाञ्जनेन हृच्चक्षु: प्रोन्मीलित च जातम् । साम्प्रतमहमपक्षग्राहितया हृदय सतुलित विधायाऽर्हतामागमान् निपुण निरीक्षिष्ये, यत इद द्विधार शस्त्रमिव सावधान परिशीलनीय कार्य वरीवृत्यते। एकत पूज्य-भावनया प्रणिपात्या आचार्या, अन्यत सयमाधारभूता शास्त्राणा-माज्ञा, कान् तिरस्करोमि का च प्रतिपद्ये इति महान् विमृष्टव्यो विषय । अतो यौष्माक कथनमगौणीकृत्य शास्त्राणा सूक्ष्मप्रेक्षिकया सम्यगध्ययन विधाय, कि यथार्थमिति निर्णेष्ये। यावदह न किमपि निर्णये तावद् युष्माभिरपि गजनिमीलिकामवलम्बमानै[1] स्थेयम्।"

अदृष्टपूर्व भिक्षुमुनेर्हृदयसारल्य विलोक्य सर्वेऽपि ते श्रद्धालव. श्रद्धालवमलकुर्वाणा अलब्धपूर्वमुत्साहमासादयन्तो व्यजिज्ञपन्—'महामुने ! भवत्सवन्धिनी यादृगी प्रतीतिरासीदस्माक हृदये, ततो-ऽप्यतिशयितमौदार्यमाविर्भावित श्रीमद्भि । याथार्थ्य व्यर्थयता महता हृदि कथमिव सन्तोष सुस्थिर स्यात् ! शीततुना जडिमान-माप्त म्रक्षण[2] किञ्चिदुष्ण-सयोगतस्तत्काल तारल्यमाद्रियते, तथात्मार्थिनामात्मापि तत् तद्वैभाविक-सयोगतो मूर्च्छितोऽपि किञ्चन स्वाभाविक स्वरूप प्रत्यभिजानन् झटिति स्वरूपारामी स्यात्। सात्त्विक-तात्त्विकधीमय-वैशाखेन[3] स्याद्वाद-दवरकेन[4] राद्धा-न्तरत्नाकर विलोड्य तत्त्व-रत्नराशि प्राप्नुवन्तु भवन्त., भूयांसो भव्यास्तेनोपकृता भविष्यन्तितरा नि सदेहम्।

एव भैक्षवमभिप्राय मनसा वाचा कर्मणा समनुजानानास्ते किमपि श्वोवसीयस[5] निष्कर्षमभिलपमाणा स्व स्व स्थानमापु ।

श्रीभिक्षुरपि तद्दिनादारभ्य पूर्णानुसन्धान-बुद्ध्या शास्त्राणा परिशीलनमारेभे । यथार्हमुपदेशादिकार्य चारुतया निर्वहन्नपि

---

१. औदासीन्य सेवमानै. । २. नवनीतम् । ३. मन्थानेन । ४. स्याद्वाद-

कर दी। विवेक के अजन ने हृदय-चक्षु को निर्मल बना दिया। अब मैं पक्षपात को छोडकर हृदय को सन्तुलित बनाकर जैनागमो का गहराई से निरीक्षण करूगा, क्योकि यह दुधारे शस्त्र का तरह सावधानी से परिशीलनीय कार्य है। एक ओर पूज्य भावना से प्रणाम करने योग्य आचार्य है, दूसरी ओर सयम की आधारभूत आगमो की आज्ञा है, किसका तिरस्कार करू और किसे स्वीकार करू, यह महान चिन्तनीय विपय है। इसलिये तुम्हारे कथन को लक्षित करता हुआ शास्त्रो का सूक्ष्म वुद्धि से अच्छी प्रकार अध्ययन करके यथार्थ क्या है, यह निर्णय करूगा। मैं जब तक कुछ निर्णय नही कर लेता तब तक तुम लोगो को भी कुछ नही कहना चाहिये, यो ही चुपचाप समय बिताना चाहिए।

मुनिवर भिक्षु का अदृष्टपूर्व हृदय-सारल्य देखकर वे सब श्रावक श्रद्धानत हो उठे। अपूर्व उत्साह से कहने लगे—"महामुने! आपके विपय मे जैसी प्रतीति हमारे हृदय मे थी उससे भी अधिक उदारता आपने दिखाई है। वास्तविकता को छिपाते हुए महान् व्यक्तियो के हृदय मे सन्तोप कैसे स्थायी हो सकता है? शीत से जमा हुआ मक्खन थोडी गर्मी का सयोग पाते ही तत्काल तरल बन जाता है वैसे ही आत्मार्थियो की आत्मा भी, वैभाविक सयोग से मूर्छित होती हुई भी, कुछ स्वाभाविक स्वरूप को पहचान कर तत्काल स्वरूपस्थ बन जाती है। सात्विक एव तात्विक बुद्धिमय मथानी से, स्याद्वाद की डोरी बाधकर सिद्धान्त रूप रत्नाकर का विलोडन करके आप तत्त्व रत्न-राशि प्राप्त करे। उससे नि सन्देह बहुत-से भव्य-प्राणी उपकृत होगे।"

इसप्रकार भिक्षु के अभिप्राय का मन, वचन और कर्म से अनुमोदन करते हुए वे कोई मगलमय निष्कर्प की आशा रखते हुए अपने-अपने स्थान पर लोट गये।

श्री भिक्षु स्वामी ने भी उसी दिन से पूर्ण अनुसन्धान बुद्धि से शास्त्रो का परिशीलन प्रारम्भ कर दिया। यथायोग्य व्याख्यान आदि कार्य को अच्छी

---

रज्ज्वा। ५. श्रेयसम्।

आशासे, ममाचार्यवरा अपि नूनं नैयायिकं कथनं शान्त्या श्रोष्यन्ति, स्तोष्यन्ति च श्रमणोपासकानां गभीरां चिन्तनचमत्कृतिम्। विनयेन प्रार्थिताः सन्तः प्रतिपत्स्यन्ते नाम स्वतः सम्मतां भगवदुक्तिम्। अतोऽधुना सर्वैस्तूष्णीशीलैरेव[1] भवितव्यम्।

प्रार्थिता अपि यथार्थदृष्टिमवजानानाश्चेद् गुरवः स्वमतपक्षरक्षा-दक्षाः स्थास्यन्ति, तदा यद् भविष्यदुदरे सन्निहितं तदेव प्राकट्य-माप्स्यति।

मञ्जुल-विचार-मनोहरां वरां श्रीभिक्षोरुक्तिमाकर्ण्य ते सर्वेऽपि भृशं सतुतुषुः। धन्या यूयम्, युष्माभिः वरमात्मनीनं विमृष्टम्। वयमपि यथादेशं विधास्यामः सोपयोगम्। सत्यम्--मन्त्रभेदोऽनल्प-खेदाय कल्पते, नातो रहस्यमुद्घाटनीयमसामयिकम्। किमु भवति मधुर-रस-परिपूर्णं भक्षणार्हमकाललूनं फलम्।

सहगामि-मुनयोऽपि भिक्षुणा सबोधिमापितास्तद्विचारधाराभिः सम्यक् सम्मताः समजनिषत, पुनस्तदनुयायित्वमुररीकर्त्तुं द्रढिम्ना सज्जा अभवन् कस्यामपि परिस्थितौ।

इत्थं तच्चातुर्मास्यं भव्यानामन्तरङ्ग-भक्तिरस-परिप्लावितम्, सुमधुर - व्याख्यान - श्रवणोत्सुक श्रावक-सघात-समृद्ध-परिषत्कम्, विविध-तत्व-चर्चा-प्रशिक्षण-विलक्षण-बोधवर्धकम्, नानाकठोर-तपस्याभिः प्रवृद्धधर्म-प्रभावनम्, अभूतपूर्वमुत्साहमयमानन्दमयं सुखं सुखेन व्यतीतम्।

व्यतीतायां कार्तिकीं पूर्णिमायां मार्गशीर्षस्य प्रतिपदायां तिथौ जयजय-ध्वनि-मुखरित-दिगन्तरैः श्रावकश्राविका-समूहैः परिवृतो भिक्षुः सह सहगामिभिर्विहारं कर्त्तुमुद्यतोऽभूद् राजनगरतः।

१. धृतमौनैः।

कि मेरे आचार्य न्याय युक्त कथन को निश्चित ही शांति-पूर्वक सुनेगे, श्रावको के गम्भीर चिन्तन की प्रशसा करेगे। विनय से प्रार्थना करने पर स्वत प्रमाणित भगवान के वचन को वे स्वीकार भी करेगे। इसलिए अभी सवको मौन ही रहना है।

निवेदन कर देने पर भी यदि गुरुवर यथार्थ दृष्टि की अवज्ञा करते हुए अपने मत की रक्षा के लिए सन्नद्ध रहेंगे तव जो भविष्य के उदर मे निहित है, वह प्रकट हो जायेगा।

सुन्दर विचारो से मनोहर श्री भिक्षु की वाणी सुनकर सव ही वहुत सन्तुष्ट हुए। आप धन्य हैं, आपने वहुत अच्छे आत्म-हित का चिन्तन किया, हम भी उपयोग-पूर्वक आपकी आज्ञा के अनुसार ही करेगे। ठीक ही है, रहस्य का प्रकट करना अनेक सकटो को आमंत्रण देना है। इसलिए यह रहस्य असमय मे प्रकट नही करना चाहिए। क्या अकाल मे तोडा हुआ फल मधुर रस से परिपूर्ण और खाने के योग्य हो सकता है?

सहगामी मुनियो को भी भिक्षु स्वामी ने इस विचार धारा से अवगत कराया। वे भी उनकी विचारधारा से सम्पूर्णतया सहमत हो गये और किसी भी परिस्थिति मे उनका अनुगमन करने के लिए दृढता से तत्पर हो गये।

इस प्रकार यह चातुर्मास भव्यो की अन्तरग भक्ति के रस से परिप्लावित, मधुर व्याख्यान सुनने के उत्सुक श्रावक समूह से वढती हुई परिषद वाला, विविध तत्वचर्चा के प्रशिक्षण से विलक्षण वोध देने वाला, नाना कठोर तपस्या के द्वारा धर्म-प्रभावना वढाने वाला अभूत पूर्व उत्साह से आनन्दमय सुख-पूर्वक वीता।

कार्तिक की पूर्णिमा वीतने पर मृगसर की एकम को जय-जय ध्वनि से दिगन्तरो को मुखरित करते हुए श्रावक और श्राविकाओ के समूह से घिरे हुए भिक्षु राजनगर से अपने सहयोगियो के साथ विहार के लिए उद्यत हुए।

भूरिसमय शास्त्रावगाहे हि व्ययते स्म, अयते स्म किमप्युल्लेख-शेखरता दधान शास्त्रवाक्यम्, तत् तत्कालमेव पृथक् पत्रे एकत्री-करोति स्म स मेधावि-मूर्धन्य । यथा-यथा शास्त्राम्भोनिधौ निमज्जनतां दधौ, तथा-तथाऽपूर्वापूर्वाण्यनुभवरत्नानि समवाप । यथा-यथाऽनुभवा विवृद्धिमायन्, तथा-तथा तदवगाहे विशिष्टा रुचिर्जागरूकाऽजायत । एव वारद्वयमागम पारावारा सम्यग-वगाहिताश्चिन्तिता, पर्यालोचिता, आत्मसात्कृताश्च तेन ।

साम्प्रत भिक्षो हृदय कामपि नव्या स्थिति, भव्या क्रान्ति चानु-भवत् श्रावकाणामग्रेऽन्यदा स्पष्टमभिव्यञ्जना चकार । विलोडितो मया द्वि कृत्व समयवारानिधिर्यथार्थदृष्ट्या । तदवगाहे किय-दानन्दानुभूति कृता मया, तदहमेव जानामि वा लब्धपारमार्थिक-प्रत्यक्ष[१] कश्चित् ।

अहो ! एकैकगमके, वाक्ये, पदेऽक्षरे वा रममाणा मे मति क्षणमिव मुहूर्त्तानि निनाय । क्व शास्त्राणा निदेश , क्वास्माकमाचारो विहित-वाह्यव्यपदेश ! खड्गधारापीषत्पारा समक्षे जैनीविचारधाराया । अत्र प्रतिपद निरीक्षणम्, प्रतिवचन विवेक , प्रतिकृत्य च जागर्या । अकृतमपि मनसाकृतमत्र कृतमभिधीयते, जातमपि मनसाऽजातम-जातमेव । विगतवादे स्याद्वादे तु वहु चिन्त्य विपश्चिद्भि । नय-निक्षेपैरपि सर्वान्तरङ्ग-विक्षेप स्वत एव विदूरितो भवति भव्यात्मना हृदि । अन्ते वहु विभावयतो मम युष्मत्कथन सत्यमेव प्रतिभातम् । वय तु दोषसमूहैरावृता आचारैविचारैरपि । परन्तु, नहीदानी-मस्या विचारधाराया प्रचार कोलाहलश्च कार्य , यावदाचार्याणा सम्मुख न स्वविचारानुपढौकये, त्वरया नहि किमपि शोभन बोभ-वीति । शनै शनैर्विहितमीहित हित साध्नोति 'विविक्तात्मनाम् ।

---

१. अवध्यादिज्ञानी ।　२ सुखेन पार नेतव्या ।

प्रकार से निभाते हुए भी ज्यादा समय शास्त्रो के अवगाहन मे ही व्यतीत करते थे। कोई उल्लेखनीय शास्त्र-वाक्य पाते तो तत्काल ही वे मेधावी-मूर्धन्य एक अलग पत्र पर अकित कर लेते थे। जैसे-जैसे उन्होने शास्त्र-समुद्र मे गोते लगाए वैसे-वैसे ही उन्हे अपूर्व अनुभव रत्न प्राप्त हुए। जैसे-जैमे उनके अनुभव वढते गये, वैसे-वैसे उनकी शास्त्रावगाहन मे विशिष्ट रुचि जाग्रत हुई। इस तरह उन्होने दो वार आगम-सागरो का सम्यक् अवगाहन, चिन्तन एव पर्यालोचन करते हुए उन्हे आत्मसात् किया।

अव भिक्षु स्वामी ने कुछ नई स्थिति और भव्य क्राति का अनुभव करते हुए एक वार श्रावको के आगे स्पष्ट उद्घोपणा कर दी। मैने दो वार शास्त्र-सागर का विलोडन किया है। अपनी वुद्धि के अनुरूप उसके मन्थन मे कितनी आनन्दानुभूति की है यह मैं ही जानता हूँ या कोई सर्वज्ञ जानता हे।

अहो! एक-एक गमक, वाक्य, पद और अक्षर मे रमण करती हुई मेरी वुद्धि ने मुहूर्तो को क्षण की तरह विता दिया। कहा शास्त्रो का निर्देश? कहा वाह्य वहाना मात्र हमारा आचार? खड्गधारा से भी अति सूक्ष्म आगम की विचारधारा है। यहा पद-पद पर निरीक्षण, प्रतिवचन मे विवेक, प्रत्येक कार्य मे जागरूकता आवश्यक है। विना किया भी, मन से किया, यहा किया माना जाता है। हुआ भी, मन से न हुआ, नही हुआ माना जाता है। वाद रहित स्याद्वाद के विपय मे तो विद्वानो को वहुत चिन्तन करने की अपेक्षा है। नय-निक्षेपो के द्वारा भव्यात्माओ के आन्तरिक विक्षेप स्वत ही दूर हो जाते है। अन्त मे वहुत मनन करने पर तुम्हारा कथन मुझे सत्य प्रतीत हुआ। हमारा आचार और विचार दोषो के समूह से आवृत है। जव तक मैं आचार्य के सम्मुख अपने विचार पेश नही कर दू, तव तक इस विचार धारा का प्रचार और कोलाहल न करे। क्योकि जल्दी मे कुछ भी सुन्दर नही हो पाता। विवेकशालियो का धीरे-धीरे किया हुआ कार्य अभीप्सित और हित को साधने वाला होता है। मैं आशा करता हूँ

परम प्रिय किमपि पृथग् भवेदितीवानुभवद्भि, भक्त्यश्रु-परिपूर्णलोचनै., मस्तक-स्पर्श मुहुस्तच्चरणकमल वन्दमानै, स्तवकितपाणिपल्लव[1] माङ्गलिक-पाठ शृण्वद्भि, सुख सुख, शनै शनैर्विहर्तव्यमिति निवेदयद्भि', पुनरत्र शीघ्र दर्शन देयमिति साग्रह प्रार्थयद्भि, श्रद्धालुजनसमूहैरभिनन्द्यमाना भिक्षुप्रभृतयो मुनयो गुर्वभिमुख प्रतस्थिरे।

प्रतिग्राम स्थातु जाजायते जनाना हार्दिकी प्रार्थना, परन्तु भिक्षु स्वगुरुदिशि दत्तदृष्टिर्नहि स्थातुमिच्छति यत्र तत्र। पतन्ति वर्त्मनि भूरिशो दुर्लभभिक्षा ग्रामटिका[2]। अत सार्थद्वय विधाय वीरभानु-प्रभृति-मुनिद्वयी भिन्नेन पथा तत्र गन्तु प्रेरिता। आत्मना तृतीयो भिक्षुरपरेणाऽध्वना गन्तुमुत्सेहे। पृथग् विहरमाण मुनिद्वयमायतिहिता शिक्षा वितरन् भिक्षु जगाद—"यदि युवा पृथग् विहरमाणौ मत्त प्रथम गुरुदर्शन विदधीयाता, तत्र नात्रत्यमस्माक मान्यता-रहस्यमीपदप्युद्-घाटनीयम्। अहमागत्य स्वय सविनय सदाक्षिण्य शान्त्या समयमारा-धयञ्च शनै शनै सर्व गुरुभ्यो निवेदयिष्यामि। तदाऽनायास सत्य शिव सुन्दर सपन्न भावि। चेद् युवा मदागमनात्पूर्वमेव भिन्नत्व-भावना प्रकटीकर्त्तास्थस्तन्निशम्य गुरवो यद्युत्तेजिता भवितारस्तदा पश्चात् कथमपि न ते सम्यक् श्रद्धास्यन्ति न्याय्यमप्यस्माक कथनम्। अश्रद्दधानैर्गुरुभि सह कथमस्माक स्थायिका सभाविनी ? अतो युवाभ्यामस्मिन् विषये पूर्णमौनमालम्बनीयम्, न च व्यङ्ग्यध्वनि-नापि तेषा हृदय विचिकित्सित विधातव्यम्।

'तथा करिष्याव' इति कथयित्वा तौ मार्ग-पार्थक्य स्वीचक्रतु।

दुग्धसर्प्पिर्मध्वादिवरिष्ठमतिगरिष्ठमपि भोजन जीर्णयितु प्रभूष्णव[3] सन्ति प्रभूता पुमास, परन्तु गुह्यवार्ता सुजीर्णा न भवति

---

१. मुकलित-करपल्लवम्। २ कुत्सिता अल्पा अज्ञाता वा ग्रामा -ग्रामटिका.।

कुछ अत्यन्त प्रिय वस्तु अलग हो रही हो, ऐसा अनुभव करते हुए श्रद्धालुजन भक्ति के आसुओ से डब-डबायी आँखो वाले बार-बार मस्तक द्वारा चरण-कमलका स्पर्श कर वन्दना करने लगे। हाथ जोडकर मगल-पाठ सुनते हुए सुखपूर्वक धीरे-धीरे विहार करना'—यो निवेदन करने लगे। यहाँ वापिस शीघ्र दर्शन देना, यो आग्रहपूर्वक प्रार्थना करने लगे। इस प्रकार अभिनदित होते हुए श्री भिक्षु आदि मुनियो ने गुरु की ओर प्रस्थान किया।

हर गाव मे उन्हे ठहरने के लिए जनता हार्दिक प्रार्थना करती थी, किन्तु भिक्षु स्वामी की दृष्टि अपने गुरु की दिशा मे लगी हुई थी। वे जहाँ तहाँ नही ठहरना चाहते थे। मार्ग मे बहुत से छोटे गाव भी पडते थे जहाँ भिक्षा सुलभ नही थी। इसलिए दो ग्रुप (भाग) बनाकर वीरभान आदि मुनि-युगल को दूसरे मार्ग से वहाँ पहुचने के लिए प्रेरित किया। श्री भिक्षु आदि तीन मुनि दूसरे रास्ते से जाने के लिए तैयार हुए। पृथक विहार करने वाले मुनिद्वय को भविष्य के लिए शिक्षा देते हुए भिक्षु ने कहा—"यदि अलग विहार करते हुए तुम मेरे से पहले गुरुदर्शन कर लो तो यहाँ की मान्यता का बिल्कुल रहस्य प्रगट मत करना। मैं स्वय ही आकर विनय एव अनुकूलतापूर्वक शाँति मे समय देखकर धीरे-धीरे सब कुछ गुरुको निवेदन करुगा। तब अनायास ही सब सत्य, शिव और सुन्दर सम्पन्न होगा। आगमन से पूर्व ही तुम लोगो ने अगर भिन्नत्व भावना प्रकट कर दी तो उसे सुनकर यदि गुरुवर उत्तेजित हो जायेगे तो फिर किसी भी प्रकार वे हमारे न्याय-युक्त कथन को भी सही नही मानेंगे। अश्रद्धाशील गुरु के साथ हमारा रहना कैसे सभव होगा ? इसलिए इस विषय मे तुम्हे पूर्ण मौन रखना है और व्यग्य-ध्वनि मे भी उनके हृदय को शकित नही बनाना है।"

"ऐसा ही करेंगे" यह कहकर वे दोनो मुनि अलग मार्ग से चल पडे।

दूध, घी और मधु आदि से विशिष्ट अति गरिष्ठ भोजन को भी पचाने के लिए बहुत से मनुष्य समर्थ हैं, परन्तु उदर-पिशाचो के पेट मे भी कोई गुप्त बात नही पचती।

---

'कुत्सिताऽल्पाज्ञातेषु' इति कप् 'गावडिया' इति भाषायाम्। २ समर्था।

खलूदरपिशाचाना[1]मुदरेष्वपि । चित्रम्—भूमौ पदावलिमविन्यस्य-न्त्यपीय विश्वसितमधिकृत्य कर्णे चुरचुरायितापि[2], कर्णाकर्णिकया सचरिष्णु: कुत्रत्या कुत्रापि प्रसर्पति वातेनाऽनीयमानापि, वार्ता अग्रे अग्रे प्रसर्पन्ती पार्श्ववर्त्तिन्या परिस्थित्या, वातावरणेन चोपचित कलेवरा कामप्यन्यादृशीमाकृतिमासादयति ।

त्वरमाणस्यापि भिक्षो श्राद्धानामतीवानुरोधेन क्वचिदवाञ्छि-तोऽपिविलम्बः समजनि ।

विशिखगत्या[3] वहमानौ तौ मुनी कथमपि कुत्रापि काल नाऽति वाहयन्तौ सत्वर गुरुचरणान् समीपयामासतु ।

इति श्री चन्दनमुनि-विरचितेऽभिनिष्क्रमणाख्ये
महाकाव्ये गद्य-प्रबन्धे दशम समुच्छ्वासः

---

१ भोजनभट्टानाम् । २. कानाफूसी, इतिभाषायाम् । ३ बाणगत्या, तीर की तरह, इतिभाषा ।

आश्चर्य ! भूमि पर पैर नही रखती हुई भी, विश्वस्त के कान मे धीरे से कही हुई भी, पवन के द्वारा अप्रसारित की हुई भी बात, एक कान से दूसरे कान मे गुजरती हुई कहा की कहा पहुँच जाती है। वह आगे-आगे बढती हुई पार्श्ववर्त्ती परिस्थिति और वातावरण से प्रभावित होकर कुछ नई ही आकृति को धारण कर लेती है।

शीघ्रता करते हुए भी, श्रावको के अति-अनुरोध के कारण श्री भिक्षु को अवाछित कुछ विलम्ब हो ही गया। वे दोनो मुनि तीर की तरह कही भी समय नही लगाते हुए गुरु के चरणो मे शीघ्र ही पहुँच गए।

## दशवा समुच्छ्वास समाप्त



## एकादश. समुच्छ्वासः | *

समस्त-वस्तु-विसर लघु-हिमकरण-मौक्तिकैर्मण्डयन्निव, प्रचण्डोऽपि रोषो न क्षान्ति-शक्त्याहन. स्थातु शक्त इतीव निजापरिमेय-शीतलतयोष्णता निर्गमयन्निव, न सर्वत्र समेपा सदृशी सपर्येति[1] [2]धूमयोनेरवमाननामभिव्यञ्जयन्निव, चिरबद्धकपाटाना गर्भ-गृहाणां द्वाराण्युद्घाटयन्निव, कामेन सह शीतेन कम्पमान-तनुना प्रवासिना पत्या विरहिणी श्यामां स्मारयन्निव, पुष्टिकृते वाताद[3]-पिस्तकाहि-फेनवीज - घुसृणाम्वर - देवकुसुम-शुण्ठि - सितोपलादि-पौष्टिक-द्रव्य-मिश्रितान् मुद्ग-माप-दालि-मोदकान् धन्यान् भोजयन्निव, सुलभ-सर्ववस्तूना सौभाग्यभाजां पूर्ण सम्माननीय· शीतर्तु समाजगाम ।

"सूर्यदेव ! शीघ्र तवोष्णान् किरणान् प्रसारय, पश्य तव शिशव. हिमान्याऽत्यन्त-कम्पमान-शरीरा [4]कटकटायितदशनास्तिष्ठन्ति" एव गावा. क्वचिदुन्नत-प्रदेशे खरांशुताप[5] प्रतीक्षमाणा प्रार्थ-याञ्चक्रु । अष्टमासेभ्य पुञ्जीकृता नीशारा[6] आविकाश्च शीतर्तु-कृपया दिवानिशमुपयोगितामापु । द्रविणाभावदु खिता जानु-भानु-कृशानुभि कथ कथमपि काल यापयन्तो बुभुक्षा-क्षामकुक्षयो रौद्र[7] वस्तुवृत्या रुद्र मेनिरे । चित्रम्—तस्मिन्नपि जैनामुनयोऽल्प-वासासि

---

१ सेवा । २ मेघस्य । ३ वाताद-बादाम, पिस्ताक-पिस्ता, अहिफेन वीज, पोस्त के दाने, इतिभाषा । ४ दातो को कटकटाते हुए, इतिभाषा । ५. सूर्य-

## * ग्यारहवां समुच्छ्वास

समस्त वस्तु-समूह को ओसविन्दु रूप मोतियो से मण्डित करती हुई, प्रचण्ड रोप भी शान्ति के आगे नही ठहर सकता, मानो यह व्यक्त करने के लिये अपनी अपार शीतलता से निदाघ को मिटाती हुई, सव जगह सव की समान पूजा नही होती, मानो यो मेघ की अवमानना अभिव्यक्त करती हुई, भूमिगत (भोहरे) मकानो के वहुत समय से वन्द किये हुए कपाटो को खोलती हुई, काम के साथ शीत से कापते हुए शरीर वाले प्रवासी को विरहिणी कामिनी का स्मरण कराती हुई, पुष्टि के लिये वादाम, पिस्ता, केसर, अम्वर, लवग, सूठ और मितोपलादि पौष्टिक द्रव्यो से मिश्रित मूग, उडद की दालो के लड्डुओ का धनिको को भोजन कराती हुई, जिनको सब वस्तुएँ सुलभ है, उन सौभाग्यशालियो के लिये पूर्ण सम्माननीय रूप से शीत ऋतु अवतरित हुई।

"सूर्यदेव! शीघ्र तुम्हारी गर्म किरणो को फैलाओ। देखो तुम्हारे वच्चे वर्फ से अत्यन्त कम्पित शरीर वाले दातो को कटकटाते हुए खडे है।" यो कुछ ऊँचे स्थान पर सूर्य के ताप की प्रतीक्षा करते हुए वच्चो ने प्रार्थना की। आठ महिनो से तह कर रखी हुई रजाईया और कम्वलें शीत ऋतु के अनुग्रह से दिन-रात के लिये उपयोगी वन गई। धनाभाव से दुखित, भूख से क्षीण उदर वाले लोगो ने जानु, (घुटने) भानु और कृशानु (आग) के माध्यम से जैसे-तैसे समय को विताते हुए रौद्र (हेमत) को वस्तुत रुद्र (भयकर) माना। विस्मय है! उसमे भी जैन मुनि थोडे-से वस्त्र धारण करते

---

तापम्। ६ रजाइया, इतिभाषा। ७ हेमन्तम्।

विभ्रतो स्कन्धे धृतोपकरणा पानीय-पात्र-पाणय [१]सूक्ष्म-वैयुष्ट-मिहिका-वृष्टचाऽसह्यशीतले भूतले त्यक्तपदत्राण विहरन्ते । जाड्यमापितकर्ण-नक्र-कर-पदागुलि-प्रान्तमपि प्रालेय[२] मुष्टिद्वयमात्रसाध्य मन्वाना अतोऽनन्तगुणिता नारक-शीत-यातना स्मृति नयमाना स्तत्परीषहमकिञ्चित्कर गणयन्तोऽवगणयन्ति । उत, सर्वमपि कष्ट धैर्याधैर्य-निकषे निष्टङ्कितमल्पत्व बहुत्व चापनोपद्यते ।[३]

पतति शीते तीव्रतरे मरुधर-प्रदेशे विहरमाणा रघुनाथाचार्या भिक्षोरागमन प्रतीक्षमाणा साधुसङ्घ—परिवृता सहजित (सोहजत) पुरीमधिवसन्ति स्म तदानीम् ।

भिक्षो प्रागेव तौ मुनी सहसा गुरुपादाब्ज-मूल स्वात्मान निन्यतु. । सहर्ष सोत्साह सविनय गुरु वन्दमानौ सुखप्रश्न च पप्रच्छतु. । वात्सल्य वर्षता तयोर्मौलौ कृपा-सूचक कर-पल्लव निक्षिपता गुरुणा शारीरिकी, मानसिकी च कुशल-पृच्छा सस्नेहमकारि । 'क्वास्ति भिक्षु. ? कथ द्वाभ्यामेवात्रागतम् ? [४]कच्चिदस्ति स कुशली ?' किमप्यनिष्टमाशङ्कमानया मुद्रया पुनर्गुरुणाऽप्रच्छि । "अस्ति भगवन् ! स युष्माक प्रेष्ठ.[५] शिष्योऽस्माक प्रष्ठो[६] मुनिर्नितान्तमानन्दी वपुषा मनसापि" सहसा प्रत्यवादि द्वाभ्याम् ।

"किमेतादृश कारण जागरित यद् वा[७] न पश्यामि तत्सहगामिनौ साम्प्रतम्" पुन सविस्मयमाचार्येणाभ्यूहितम् ।

न चिन्त्य किमपि, पतन्ति खलु पथि भूरिशो ग्रामटिकास्तत्र न सुलभा भिक्षा भिक्षुकैरतस्तै. पथपार्श्वक्यमावयोर्विहितम्, अविलम्बमावामागतावत्र, तेपामप्यद्यश्वीन[८] ह्यागमन भावीति नौ निर्णय ।

---

१ सूक्ष्म-प्राभातिक-हिमवृष्ट्या । २. हिमपातम् । ३. भृश आपद्यते आपन्नः पद्यते । ४. इष्टप्रश्ने । ५ अतिशयेन प्रिय । ६ अग्रगामी । ७. युवाम् ।

हुए कन्धो पर उपकरण रखकर पानी का पात्र हाथ मे लेकर प्रभात मे होने वाली सूक्ष्म वर्फ की वृष्टि से एकदम शीतल वनी जमीन पर विना जूते पहने विहार करते है। कान, नाक, हाथ और पैर की अगुलियो से अग्रभाग को जड वना देने वाली सर्दी को दो मुठ्ठी मात्र मानते है। इससे अनन्तगुनी नरक की शीत-यातना को याद करते हुए, शीत-परीषह को मामूली समझते हुए उसकी उपेक्षा कर देते है। वास्तव मे सारे ही कष्ट धैर्य-अधैर्य की कसौटी पर कसने पर ही कम ज्यादा अनुभूत होते है।

उस तीव्र सर्दी के समय मरुधर प्रदेश मे विहार करते हुए आचार्य रघुनाथजी, श्री भिक्षु के आगमन की प्रतीक्षा मे अपने साधु सघ से परिवृत 'सोहजत' शहर मे विराजमान थे।

भिक्षु से पहले ही वे दोनो मुनि अकस्मात् गुरु के चरण कमलो मे पहुँच गये। सहर्ष उत्साहपूर्वक विनय से गुरु को वन्दना की और सुख प्रश्न पूछा। गुरु ने भी वात्सल्य की वर्षा करते हुए अपना कृपा-सूचक हाथ उनके मस्तक पर रखा एव स्नेहपूर्वक शारीरिक तथा मानसिक कुशल पूछा। भिक्षु कहा है? तुम दो ही यहां कैसे आये? क्या वह कुशल है? कुछ अनिष्ट की आशंकावाली मुद्रा से गुरु ने फिर जानना चाहा। "हा भगवन्! वह आपका अतिप्रिय शिष्य और हमारा अग्रेसर मुनि शरीर और मन से पूर्ण स्वस्थ है।" 'तत्काल उन्होने प्रत्युत्तर मे कहा।

"ऐसा क्या कारण हुआ उसे और उसके साथियो को नही देख रहा हूँ?" विस्मय करते हुए आचार्य ने पुन प्रश्न उपस्थित किया।

सोचने जैसा कुछ भी नही, मार्ग मे वहुत से छोटे गाव पडते है, वहां साधुओ को भिक्षा सुलभ नही है, इसलिये उन्होने हमारा पथ पृथक् कर दिया। हम यहां जल्दी पहुँच गये। वे भी आज-कल तक पहुँच जायेंगे, ऐमा लगता है।

---

८ आसन्नम् आज-कल तक, इतिभाषा।

अवगन्तव्यमिदमेव यद् राजनगरीया श्रावका. सत्या सत्यप्ररूपका: सत्यप्रेरकाश्च। तद्वद् वयमसत्या असत्य-प्ररूपका सावद्यानुमोदयितारश्च। प्रत्यह प्रतिपदमस्माभि प्रायश्चित्तार्हाणि कार्याणि क्रियन्ते। उपाश्रयादिनिर्माणाय श्रावका- प्रेर्यन्ते। उद्गमोत्पादादिदोपकलुपित प्रायोऽन्न-वस्त्र-पात्रौषधाद्युपभुज्यते। नास्ति तत्वानां श्रद्धापि न. शास्त्रोन्मुखा। [1]आलप्यालमिदम्, कणपरीक्षया स्थालीपाकपरीक्षा स्वतोऽर्थापत्याऽनुमातव्या। हन्त! बहुविकृत विद्यतेऽस्माकम्, तत्सर्व भिक्षुराख्यास्यति चारुतया।

स्वामिन्! वस्तुतस्तु तत्र तान् प्रतिबोधयितु गता वय, प्रत्युत तेभ्य प्रतिबुद्धा.। जाज्वल्यमानोऽय.पिण्डो यथा तोय तप्तिमानेतुं गतोऽपि स्वय शीतलतामात्मसात्करोति, तथा वयमपि।

यौक्तिक तेपा कथन रहस्ये भिक्षुणा निर्विवाद प्रतिपन्नमतएव श्रावकैर्भक्त्या वन्द्यः पूज्य. सम्माननीयश्चाजनि।" इति निगद्य जोषमासिषेवाते तौ।

इति श्रुत्वा कोपकम्प्राधरा अरुणितनेत्रा भृकुटि-भीपणा विमनायिताश्च जज्ञिरे गुरुचरणा।

ओ'!! किं चिन्तित, किं जातम्? मम प्रत्ययितो भिक्षुर्मे ग्रन्थिच्छेद करिष्यतीति स्वप्नान्तरेऽपि नाऽकल्पि मया।

धिग् धिग्!! वयमुन्मार्गगामिन'! वराका श्रावका सत्यालोचका'!! नाहमेतादृशं घोरमपमान सहिष्ये, करिष्ये च तात्कालिकी प्रतिक्रियाम्। येन श्रावकै. सह भिक्षुरपि भोत्स्यते स्वत उन्मार्ग-प्ररूपणा-फलम्। किमत्र [2]पोपाभगिन्या राज्यम्? यदृच्छया कोऽपि किमपि प्ररूपयितु शक्नुयात्! आगच्छतु भिक्षुर्दर्शयिष्यामि

---

१ अल कथनेन। २. पोपाबाई का राज्य, इतिभापा।

निवेदन करते है। उनका यही तात्पर्य है कि "राजनगर के श्रावक सच्चे हैं, सत्य प्ररूपक है और सत्य-प्रेरक हैं, वैसे ही हम असत्य है, असत्य के प्ररूपक हैं और सावद्य की अनुमोदना करने वाले है। प्रतिदिन पग-पग पर हम प्राय-श्चित्त-योग्य कार्य करते है। उपाश्रय आदि के निर्माण के लिये प्रेरणा देते है। उद्‌गम, उत्पाद, आदि दोषो से दूषित अन्न, वस्त्र, पात्र और औषधि आदि का उपयोग करते हैं। तत्त्वो की श्रद्धा भी हमारी शास्त्र-सम्मत नही है। बस, अधिक कहने से क्या ? कण-परीक्षा से हडिया मे पके हुए धान्य का अर्था-पत्ति से स्वत अनुमान लग जाता है। खेद है—हमारा बहुत कुछ विकृत है, वह सब अच्छी तरह भिक्षु ही बतायेंगे।

स्वामिन् ! वास्तव मे वहा हम उन्हे प्रतिबोध देने के लिये गये हुए हम उनसे प्रतिबोध ले आये हैं। जैसे पानी को गर्म करने के लिये गया हुआ जाज्वल्यमान लोहे का पिण्ड स्वय शीतलता पा जाता है, वैसा ही कुछ हमारे साथ हुआ।

युक्तिपूर्ण उनका अभिमत, एकान्त मे भिक्षु मुनि ने निर्विवाद रूप से स्वीकार कर लिया। इसलिये ही वे श्रावको के द्वारा भक्ति से वन्दनीय, पूजनीय और सम्माननीय हो गये, इतना कहकर वे दोनो मौन हो गये।

यह सुनकर आचार्य रघुनाथजी के अधर कोप से कापने लगे, आखे लाल हो गई, भृकुटी भीषण रूप से तन गई और एकदम अन्यमनस्क हो गए।

अहो ! क्या सोचा था ? क्या हो गया ? मेरा परम विश्वास पात्र भिक्षु मेरी ही गांठ काटेगा—ऐसी मुझे स्वप्न मे भी कल्पना नही थी।

धिग्-धिग् ! हम उन्मार्गगामी है और वे बेचारे श्रावक सत्य के आलोचक है ! ऐसा घोर अपमान मैं नही सहन करूँगा और तत्काल प्रतिकार करूँगा, जिससे श्रावको के साथ स्वय भिक्षु भी उन्मार्ग-प्ररूपणा का फल भोगेगा। क्या यहाँ पोपाबाई का राज्य है ? जो स्वेच्छा से कोई भी, कुछ भी, प्ररूपणा

"वहूपकृत युष्माभिस्तत्र, परिवर्धमानेनोत्साहेन चातुर्मास्य व्यतीतमिति शोश्रुतमागन्तुकाना मुखेभ्य " पुन सोल्लास जिज्ञासित गुरुवर्येण ।

"सर्व श्रीमता कारुण्यम् । महत्प्रभावशाली युस्माकमन्तेवासी भिक्षु मुनि । न कथ सुरभिताना सुमनसा सौरभ दिग् दिगन्तर प्रसर्पेत् ? किन्तु" • • प्रोक्तमन्यतरेण मुनिना ।

"कथ प्रयुक्त त्वया किन्तु ? किन्तुना प्रतिपाद्यमपोदित स्यात् । कि सदिग्धा श्रावका नाभवन् गुरभक्ति-स्निग्धा " ससभ्रम वुभुत्सित[1] चाचार्यै ।

'न कथ जाता ? जाता श्रावकास्तु तद्भक्तिरक्ता, परन्तु तत् सर्व भिक्षुरागत्यैव कथयिष्यति, नास्माकमधिकारस्तदाविर्भावयितुम्" प्रत्युक्त सव्यङ्ग तेन ।

"तद्भक्ति-रक्ता वा मद्भक्ति-रक्ता, कि त्वया व्यक्तीकृत शव्दजालमुत्सर्पयता मुधैव । स्पष्टय, किमन्तरङ्गा स्थितिरिति" सभारमाचार्यैरन्वयोजि पुनरपि ।

"अलमस्थानीयया चर्चयाऽनया, सोऽलकर्मीण स्वयमवगमयिष्यति गुरु यथार्थरहस्येन वीतशङ्कम् । आगच्छन्त एव सन्ति ते मुनयो न वहीयान्[2] विलम्व " विज्ञप्त ताभ्याम् ।

"किमस्ति गोप्यमाचार्याणां पुरत विनयिना विनेयानाम्[3] ? न भेतव्य युवाभ्याम्, सत्य-परिस्थित्याऽवगन्तव्या वयम् । न धैर्यमालम्वते जिज्ञासातुर मे चेत " आश्वासन ददता रघुणाचार्येणाऽऽज्ञापि ।

अग्रगण्य-शासनादप्याचार्याणामाज्ञा वलीयसीति विभावयद्भ्या ताभ्या किञ्चिद् रहस्योद्घाटनमकारि—"भगवन् ! भिक्षुणैव विज्ञपनीय सर्वम्, तथापि युष्मदादेश-निघ्नतया[4] प्रकाश्यते किञ्चिद् ।

---

१. वोद्धुमिष्टम् । २ अतिशयेन वहु वहीयान् । ३ शिष्याणाम् ।

